क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः
शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ॥ २ ॥

प्राणाघातान् निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ ३ ॥

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अबोधोपहताश् चान्ये जीर्णमङ्गे सुभाषितम् ॥ ४ ॥

---

BIS. 1895 (729) Bhartṛ. ed. Bohl. **1.** 63. Haeb. **1.** 66, **3.** 95. Śatakāv. 70 and 110; SRB. p. 371. 132; SBH. 3390. Kṣemendra's Aucityavicāracarcā (KM. 1, p. 129, Candraka); Namisādhu in Rudraṭa's Kāvyālaṁkāra; SN. 251.

3 V. in **N** (but J1 N. 101) and N. in **S**. Omitted in I. O. (Keith) 7207. NS 3. V. 62, N. 111 (extra). ISM Kaḷaṁkar 195. N. 103 (105) and V. 80 (82). — [a]) B1.2 (orig.) F2 H Y7 T2.3 M1–3 प्राण्याघातान्; F5 प्राणाघाते; W2 प्राणीघातान्; M4 प्राणाघाता. B परधनहरणात्. T2 संयतं (for संयमः). M1.2.4 वाचि सत्यं (for सत्यवाक्यं). — [b]) T3 सत्या (for शक्त्या). A2 -मुग्धभावः (for -मूकभावः). — [c]) A0–2 B E F5 H1 I W1.3 X2 (orig.) तृष्णाश्रोतोविभंगो; A3 तृष्णोस्रोतो°; D तृष्णारामाभंगो; F3 Y7 तृष्णास्रोतोविभागो; X1 Y1 (except printed text) तृष्णाशांतोर्मिभंगो; G1 °स्रोतोविषंगो; M2 °स्रोतोवभंगो; M4 °स्रोतोनिभंगो; M5 °स्रोतोतिभंगो. F5 विनतिः (for विनयः). — [d]) E सामान्या; E4 (orig.) Y1 सामान्ये; J X Y2.3.7.8 T G4.5 M2.5 सामान्यं; G1 M1.3.4 प्रामाण्यं (for सामान्यः). B H1c.2 M4 अनुपहतगतिः; C F2.5 X Y1.8 °हतमतिः; D °मतविधिः; J °हतधियां (for °हतविधिः). I एक-; W2.3.4 (orig.) Y7 एव (for एष).

BIS. 4310 (1891) Bhartṛ. ed. Bohl. **2.** 60. lith. ed. I. 25, II and Galan. 26; SRB. p. 180. 1056; SRH. **7.** 19 (Bh.); SRK. p. 99. 2; Yaśastilakacampū of Somadeva (KM. 70, part II, p. 99, Vararuci; com. Vararuci = Kātyāyana); SA. **24.** 89; SSD. **2.** f. 95a; SKG. f. 17b.

4 V. in **N** and W; N.2 in X Y. — [a]) B1 बौद्धारो; M3 बोधारो. F2 मत्सरप्रासाः; It मच्छरग्रस्ताः; J1 मस्तर°; M3 मतर°. — [b]) F4 (marg.) स्मय = गर्व. — [c]) B1 E0.2.3c.5 H I X1 Y3 अज्ञानोप°; J1 अवबोधोप°. E5 मन्ये, perhaps अन्ये in com. (for चान्ये). — [d]) M3 अंके (for अङ्गे).

BIS. 4488 (1988) Bhartṛ. ed. Bohl. Haeb. lith. ed. I, II and Galan **3. 2.** ŚKDr. under बोद्धृ; SRB. p. 39. 18; SBH. 139; SRH. **1.** 6. (Bh.); SRK. p. **1. 9** (Sphuṭaśloka); SK. **2.** 24; SSD. **1.** f. 81b.

यदा किंचिज्ज्ञोऽहं गज इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किंचित् किंचिद् बुधजनसकाशादवगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥ ५ ॥

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस् त्रिभुवनमपि ब्रह्म तनुते ॥ ६ ॥

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्मणि ।

---

5 V. in **N** and N. in **S**. NS 3. V. 49, N. 103 (extra). — a) $F_5$ किंचिद्गोहं; $W_4$ (orig.) किंचित्सोहं. $A_3$ C D $Eo._{2.5}$ F (except $F_3$) W ($W_4$ orig.) $X_2$ $Y_3$ द्विप (for गज). $J_{2.3}$ सविभवस् (for समभवं). — b) $G_2$ [इ]त्यभवम् (for [इ]त्यभवद्). $W_{2-4}$ अनुलिप्तं (for अव°). — c) $M_4$ बुधवर° (for बुधजन°). C D $F_{4.5}$ X अधिगतं; $J_1$ $T_8$ $M_3$ अपगतं; $J_{2t.3}$ अनुगतं (for अव°). — d) $G_5$ मूढो (for मूर्खो). $J_{2t}$ $G_1$ $M_3$ [ऽ]प्यपगतः; $X_1$ विगलितः (for व्यप°).

BIS. 5188 (2347) Bhartṛ. ed. Bohl. and lith. ed. II. **2**. 8. Haeb. **3**. 100. lith. ed. I. **2**. 7. Galan 10. Subhāsh. 311; Sp. 4177 (Bh.); SRB. p. 41. 58 (Bh.); SBH. 3456 (Bh.); SRK. p. 34. 5 (Bh.); SK. **6**. 37; SU. 1051; SSD. **4**. f. 28b; SSV. 760; BPS. 157.

6 V. in **N** and X; Ś. in W Y; NS3. V. 98, Ś. 110 (111, extra). — a) $F_2$ अज्ञान-; I $G_4$ $M_{4.5}$ अस्माकं (for अज्ञानं). $J_{2.3}$ संसारजनितं; **S** (except X $G_1$) °संचा( $Y_7$ °भा )रजनितं ($Y_3$ °निरतं; $G_4$ °जडितं). — b) $J_{2t}$ $M_3$ यदा (for तदा). $F_{1.2}$ हृष्टं; $F_3$ दृष्टं; $J_{2c}$ दृष्ट्वा; W सर्वं; X मन्ये (for दृष्टं). D नारीनरमयम्; $Y_6$ नारीजनमिदम्. $F_2$ om. इदम्. B C $F_{2.3.4}$(orig.)$._5$ $J_{2.3}$ X $Y_{1.3-8}$ T G (except $G_4$) $M_{1.2}$ जगदिति; W जगद्भूत्; $Y_2$ जगादिदं. — c) $F_2$ प्रकटित- (for पटुतर-). $J_1$ -विशेषांजन-; $M_4$ -विलोकांजन-. W -दृशां; $Y_1$; (except printed text) -जुषा; $M_4$ -जुषीं (for -जुषां). — d) $G_4$ तमीभूता; $M_4$ तपी°; $M_5$ नवी° (for समी°). $J_1$ त्रिभवनम्. $J_1$ X $G_4$ इदं (for अपि). $F_2$ ब्रह्मैव (for ब्रह्म). $A_3$ B C F H I $J_{2.3}$ W (except $W_{3t}$) Y T $G_{1-3.5}$ $M_{1-3}$ मनुते; $G_4$ कुरुते (for तनुते).

BIS. 5202 (2357) Bhartṛ. ed. Bohl. **1**. 98. Haeb. 101, and **3**. 88. lith. ed. II. **1**. 102, and **3**. 77. Subhāsh. 315. Śāntiśataka **4**. 14 (Haeb. p. 427). Kāvyakal. 33. Śatakāv 38; SRB. p. 375. 246; SDK. **5**. 63. 3 (p. 319); Sarasvatīkaṇṭhābharaṇa **5**. 115 (KM. 94, p. 609); SK. **7**. 23; SSD. **4**. f. 28b; JSV. **304**. 12.

7 Ś. in **N** and W; N. in X Y T G M. — a) $H_2$ धाम; $W_4$ सद्म (for सद्म). $F_5$ I $W_{3t}$ सुविभ्रमा; $Y_7$ शशिभ्रमा. $E_5$ $F_3$ °पत्रोज्वलाः. — b) $F_4$ °भूतये (for °भूयते). $A_3$ स्थितमिव; C थिरमिव; $Eo._{1.4.5}$ स्थिरमति- ($Eo._5$ °तिः); $E_3$ स्फिरमिव; $Y_2$ $G_1$ M

विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
  मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दृशो दृश्यताम् ॥ ७ ॥

## NĪTI (8–76)

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ ८ ॥

प्रसह्य मणिमुद्धरेन् मकरवक्रदंष्ट्राङ्कुरात्
  समुद्रमपि संतरेत् प्रचलदूर्मिमालाकुलम् ।
भुजंगमपि कोपितं शिरसि पुष्पवद् धारयेन्
  न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ९ ॥

---

स्थिरमनु-; $Y_6$ T $G_4$ चिरमनु-; $Y_8$ स्थिरतरं (for स्थिरमिव). $F_2$ स्फारे; J $Y_{2.4-8}$ T $G_{3-5}$ M -स्यूते (for स्फीते). — [c]) B $E_{2t}$ छिन्नेस्मिन्; C विच्छिन्नं; $Y_6$ संछिन्ने. $F_2$ $W_{2t}$ $Y_{1.3}$ [ऽ]तितराम् (for नितराम्). D J $X_1$ -तृटत्तंतुकं; $F_5$ $G_1$ $M_3$ -त्रु($F_5$ -तृ)टत्कंचुकं; $W_{2.3}$ -त्रुट्यत्तंतुकं; $Y_2$ -महत्कंतुकं; $Y_4$ $M_2$ -त्रुटत्कंदुकं; $G_{2.5}$ -त्रुटत्तंतुके; $G_4$ -त्रुटत्कंतुकं (for -त्रुटत्तन्तुकं). — [d]) $X_{2t}$ मुक्ताज्वालम्; $G_1$ मुक्ताहारम्. $G_2$ प्रयांति. $E_3$ I झटति; $E_5$ त्रुटिति; $F_2$ झडति; $F_5$ भ्रकुटि-; $J_1$ झडिति; $Y_2$ सततं; $Y_7$ सकलं (for झटिति). B $E_3$ $H_1$ भ्रस्यद्दिशो; C भ्राम्यन्नवं; D $E_{0.1.4}$ $F_{1-4}$ $H_2$ I $J_1$ W $Y_{3-6.8}$ T $G_2$ (by corr.).$_{3-5}$ भ्रश्यद्दिशो ($W_{2t.3t}$ °द्दस्यो); $E_2$ भ्रस्यद्दृशो; $F_5$ भ्रश्यद्दृशा; $Y_2$ भ्रश्यन्दशौ; $Y_7$ भ्रंशाद्वृथा (for भ्रश्यद्दृशो). $A_{0.1}$ $Y_{1C}$ [ऽ]दृश्यतां; C यौवनं; $J_1$ दृश्यते; $Y_7$ भ्रश्यतां; $T_3$ विश्वसा (for दृश्यताम्). [The correct reading may be अदृश्यताम् as in $A_{0.1}$ $Y_{1C}$.].

BIS. 6495 (3003) Bhartṛ. ed. Bohl. **1**. 95. Haeb. 98. lith. ed. II. **2**. Kāvyas. 97; SSD. **2**. f. 120a; SLP. **4**. 52 (Bh.).

8 $A_0$ $E_3$ fol. missing. — [a]) $Y_3$ सुखतरम् (for सुखम्). $M_{4.5}$ अवबोध्यः (for आराध्यः). — [b]) $M_{4.5}$ अवबोध्यते (for आराध्यते). — [d]) $B_1$ $Y_8$ तं; D $F_{2.3.5}$ W ($W_4$ orig.) X तं नरं; $Y_1$ (c.v. as in text) [न] तं नरं (for नरं). $M_{4.5}$ बोधयति (for रञ्ज°).

BIS. 105 (39) Bhartṛ. ed. Bohl. lith. ed. II and Galan **2**. **3**. Haeb 2. Hit. ed. Schl. IV. 99. ed. Johns 104. Subhāsh. 302; Śp. 208 (Bh.); SRB. p. **40**. 25 (Bh); SBH. 393 (Bh.); SRH. **29**. 23 (Bh.); SRK. p. 34. 1 (Bh.). SA. **33**. **2**; SHV. f. 36a (Bh.); SN. 695; SSD. **2**. f. 132a; SSV. 759.

9 $A_0$ $E_3$ fol. missing. Om. in $J_{2.3}$. Combined with no. 319 लभेत सिकतासु in Rāṇā Pratāp's metrical translation. — [a]) C °घोरदंष्ट्रांकुरात्; Y $T_{1.2}$ G $M_{1-4}$ °वक्रदंष्ट्रांतरात् ($Y_{1A}$ and printed ed. °ष्ट्रालयात्). — [b]) $J_1$ संचरेत्; $Y_{4.5}$ $T_1$c.v. लंघयेत् (for संतरेत्). A B $H_2$ I $Y_3$ प्रसरद्-; $W_{2.3}$ प्रचरद्-; $W_4$ प्रचुरद्- (t.v. चपलम्) (for प्रचलद्-). [प्रचरद्- may be the original reading]. $F_3$ मालाकुलान्. — [c]) $E_1$ पुप्फवद्; $M_5$ पुष्पमिव (for पुष्पवद्). $X_2$ धारयन् (for धारयेन्).

BIS. 4283 (1876) Bhartṛ. ed. Bohl. Haeb. lith. ed. II and Galan **2**. **4**. lith ed. I. 3. Subhāsh. 302; Śp. 416 (Bh.); SRB. p. **40**. **56** (Bh.); SBH. **446** (Bh.); SRK. p. 34. 2 (Bh.); SSD. **2**. f. 131b.

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ १० ॥

मणिः शाणोल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः ।
कलाशेषश् चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश् चार्थिषु नराः ॥ ११ ॥

---

10 $A_0$ $E_3$ fol. missing. $Y_4$ $G_{2.3.5}$ read the latter portions of each pāda (i. e. after caesura) in *cabd* order (with v.l.). — [b]) $F_5$ विगतपंकजं. — [c]) $A_2$ D $E_1$(orig.).$_2$ $F_4$ $J_{1.3}$ $Y_{1A}$(orig.).$_{2.4.6.8}$ T G (except $G_2$) M सततदुर्गतिः. — [d]) G नृपांकणगतः. $A_2$ सल्यानि मे; $F_4$ $G_1$ $M_3$ शल्या इमे.

BIS. 6434 (2973) Bhartṛ. ed. Bohl. **2.** 46. Haeb. 5. lith. ed. I. 55, II. 56. Galan 59. Aṣṭaratna 7 (Haeb. p. 8). Sāhityadarpaṇa **10** (p. 334). Subhāsh 303; Śp. 1530 (Bh.); SRB. p. 177. 993; SBH. 3458 (Bhaṭṭavṛddhi); SDK. **5.** 36. 5 (p. 302, Śilhaṇa); SRH. **181.** 59 (Bh.); SRK. p. 240. 94 (Bh.); com. on Chadrāloka **5.** 97; Kāvyaprakāśa **10**; Kāvyapradīpa (KM. 24, p. 428); Kāvyānuśāsana of Hemacandra **6** (KM. 71, p. 285); Alaṁkārasarvasva (KM. 35, p. 204). Udāharaṇacandrikā; AMD. 914 (Bh.) [This stanza is the most generally cited of Bhartṛhari's in Alaṁkāra texts]; SHV. app. I. f. 10a. 49; SK. **2.** 104; SSD. **2.** f. 153b; SMV. **10.** 16; JSV. **301.** 3; SKG. f. 11a.

11 Fol. missing in $E_3$. — [a]) $W_2$ मणी. D शाढोल्लिढः; $J_2$ श्याणोल्लीढः. $A_3$ हेतिनिहितो; $B_1$ $E_1$m.v. $F_{1.4}$ J $X_1$ (by corr.) Y (except $Y_3$) T G M हेतिदलितो; $B_2$ हेतुनिहितो; $E_0$ हेतुनिहतो (for हेतिनिहतो). — [b]) $A_{0.1.3}$ सरदि सरितः; $B_2$ C $J_{1.3}$ **S** (except $X_1$ $Y_{1.3}$) शरदि स($B_2$ श)रिदा-; D °दि च सरिच्; $F_1$ °दि सरतः; $E_2$ शरदसरितः; $F_{1.4}$ सुरतमृदिता. B W $Y_{4-8}$ T G M श्यानपुलिना($W_1$ °नः); D छामपुलिना; $E_2$ क्षामपुलिनाः; $F_1$ बालवनिताः; $F_3$ $Y_1$ श्यामपुलिनाः; $F_4$ वारवनिता; $J_1$ $Y_2$ स्यानपुलिना; $X_1$ $Y_3$ स्यानपुलिनाः [$E_1$ (marg.) शुष्ककंठः; $E_0$ शुष्कतटा]. — [c]) $H_1$t कलालेशश्. $F_{1.4}$ शरदि सरिदा- ($F_4$ शरदा-); $J_1$ सुरतद्दतिता; $W_{2.3}$ $G_1$ $M_4$ सुरतमुदिता. $A_{0.1.3}$ $E_2$ $F_5$ $H_1$ बालवनितास्; B C $E_{0.1.5}$ $W_1$ बालललना ($B_1$ °नास्); $F_1$ श्यानपुलिनास्; $F_4$ स्यानपुलिना (for बालवनिता). — [d]) $B_2$ I $W_{3.4}$ $X_2$ न निम्ना; $E_{0.1.5}$ न निम्नाः (for तनिम्ना). $F_4$ राजंते (for शोभन्ते). C व्ययित° (for गलित°). $A_3$ $F_1$ $Y_{2.7}$ $M_{1.3}$ नृपाः; B D $E_{0.1.5}$ $F_5$ H I W $Y_1$t $G_4$ (by corr.) जनाः; $J_1$ नरः; $T_3$ नताः (for नराः). $J_2$ lacuna (for श्चार्थिषु नराः); $J_3$ विभवश्चार्थिषु नृपः.

BIS. 4657 (2087) Bhartṛ. ed. Bohl. **2.** 36. Haeb. 6. lith. ed. I. 43, II. 44. Galan 47. Subhāsh. 303; Śp. 1529 (Bh.); SRB. p. 177. 983; SBH. 3457; SRH. **170.** 12 (Bh.); Kuvalayānanda 60; Com. on Dhvanyāloka; Com. on Vākyapadīya. II. 89; SHV. app. I. f. 10a. 48.

परिक्षीणः कश्चित् स्पृहयति यवानां प्रसृतये
स पश्चात् संपूर्णो गणयति धरित्रीं तृणसमाम् ।
अतश् चानेकान्ता गुरुलघुतयार्थेषु धनिनाम्
अवस्था वस्तूनि प्रथयति च संकोचयति च ॥ १२ ॥

शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।
तज् जाड्यं वसुधाधिपस्य सुधियो ह्यर्थं विनापीश्वराः
कुत्स्याः स्युः कुपरीक्षकैर्न मणयो यैरर्घतः पातिताः ॥ १३ ॥

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।

---

12 GVS 2387. N. 7, 22. — [a]) W2 परिक्षीणं. F2 यवानी- (for यवानां). (W4 com. तुषाय). W4 प्रसृजये; Y2 प्रसृतिकां (for प्रसृतये). — [b]) A0-2 तत्पूर्णो; J2 संपूर्णे; M5 संपूर्ण (for संपूर्णो). F1 J S (except Wc Y1.3) कलयति (for गण°). D तृणसमं. — [c]) C अतश्चानेकार्त्या; D F1 °श्चानेकांतां; E0.1.5 °श्चानेकांतं; F2 J2 W1-3 °श्चानेकांत्याद्; F5 X1 Y1 °श्चानेकांत्यं; H X2 °श्चानैकांत्याद्; I °श्चानेकांते; J1 G5 °श्चानेकांतो; W4 °श्चानेकांत्या; Y2 °श्चानेकांतर् (for °श्चानेकान्ता). [In most N MSS. तयार्थेषु is indistinguishable from तयार्घेषु.] — [d]) A2 अवस्थां. C प्रकटयति; Y2 प्रचयति च (for प्रथयति च).

BIS. 3955 (1713) Bhartṛ. ed. Bohl. 2. 37. Haeb. 7. lith. ed. I. 44, II. 45. Galan 48. Subhāsh. 303; SRB. p. 65. 15; SSD. 2. f. 105b.

13 GVS 2387. N. 9, 23. — [a]) It शास्त्रोपप्लुत-; Ic शास्त्रौघप्लुत- (for शास्त्रोपस्कृत-). D °शाब्द° (for °शब्द°). F4t.v. शिष्योपदेशागमा. — [b]) E2 विष्याताः; T3 प्रख्याताः (for विख्याताः). A3 विशंति; Y6.7 T3 भवंति (for वसन्ति). D तस्य (for यस्य). Aot B Eot J1.3 W1.2 X2 Y1A प्रभो (for प्रभोर्). — [c]) F1.4 Wt (W4t.v. as in text) कवयो (for सुधियो). B1 F3 J2.3 Y4.5 [ऽ]प्यर्थं; C Y6-8 T1.3 G1.4.5 M त्वर्थं; F2 ह्यर्थैर्; W4(t.v. as in text) येर्थं; X2 स्वार्थं (corrupt); Y2 T2 चार्थं [orig. may have been *अर्थं (with hiatus) after caesura.] Y3 विनाधीश्वराः. — [d]) A2.3 B E0 F4.5 W2 Y1A कुत्साः; E1.5 F2 J3 कुत्सा; E1t.v. निंद्या; G1-3 कुत्स्या (for कुत्स्याः). B2 D F1-4 H W4 (by corr.) Y1A (and printed text).4.5 कुपरीक्षका न; C Y7 कुपरीक्षणे न; W (W4 orig.) कुपरीक्षका हि (W3.4 both c.v. °क्षकैः); X1 कुपरीक्षकाश्च (for कुपरीक्षकैर्न). X2 कुपरीक्षकाश्चमणयो. C मनयो; X1 (orig.) मृगयो; X1 (by corr.) मृणयो (for मणयो). A2 B I H Y7 अर्थतः; D E0 अर्धतः; F1 J2 W1.3.4 (orig.) X Y3 अर्घ्यतः; F5 अर्च्चितः; G5 (orig.) अर्थितः (for अर्घतः). [It is difficult to distinguish between थ and घ in most N MSS.].

BIS. 6452 (2980) Bhartṛ. ed. Bohl. 2. 12. Haeb. 8. lith. ed. I. 14, II and Galan 15. Śatakāv. 78. Subhāsh. 303; SRB. p. 39. 27; SRK. p. 32. 2 (Bh.); SK. 6. 428; SG. f. 33a; SSV. 750; SMV. 11. 4.

14 [a]) A1.3 H2 क्षमाः (for क्षमा). — [c]) D E2 F2.4.5 H1 I J2 X Y1A.3 चाभिरुचिर् (for °रतिर्). Y7 विनयः (for व्यसनं). I श्रुते (for श्रुतौ).

यशसि चाभिरतिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥१४॥

हर्तुर्याति न गोचरं किमपि शं पुष्णाति यत् सर्वदा
*अर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।
कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान् प्रति मानमुज्झत नृपाः कस् तैः सह स्पर्धते ॥ १५ ॥

अधिगतपरमार्थान् पण्डितान् मावमंस्थास्
तृणमिव लघु लक्ष्मीर्नैव तान् संरुणद्धि ।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥ १६ ॥

BIS. 6147 (2825) Bhartṛ. ed. Bohl. 2. 53. Haeb. 9. lith. ed. I. and III. 62, II. 63. Galan 66. Hit. ed. Schl. I. 28. ed. Johns. 32. Subhāsh. 61. Saṁskṛt Pāthop. 61. Carr. 463; Śp. 209 (Bh.); SRB. p. 50. 188 (Bh.); SBH. 267 (Mendhaka); SKM. 6. 23 (Bhartṛmentha); SRH. 168. 30 (Bh.); SRK. p. 17. 62 (Bh.); SA. 24. 97; SHV. f. 46a; SK. 2. 66; PT. 1. 2; SSD. 2. f. 94b; SSV. 416; SKG. f. 17a.

15 [a]) X2 T1c.v. हर्तुं याति न; M5 हर्तुश्चानति-. E2t F4 (orig.) किमपि सं-; M4 किमचिरं (for किमपि शं). C F2 पुष्पाति; X1 पुष्णंति. Eo.5 सर्वात्मना; Y4.5 यत्सर्वथा; G4 तत्सर्वदा. — [b]) A C चार्थिभ्यः; B D Eo.1.2c.3.5 F1.4 I X Y1.4–6.8 T1.2 G6 M1.2 [अ]प्यर्थिभ्यः; E2t F2.3 H J W Y2.3.7 T3 G2–4 M4.5 ह्यर्थिभ्यः; F5 त्वर्थिभ्यः; G1 M3 प्रार्थिभ्यः (for *अर्थिभ्यः). E3.5 प्रतिपद्यमानम्. Eo–2.5 वृद्धिं परां गच्छति. X2 परं (for पराम्). — [c]) Y2 नोपयाति (for न प्रयाति). Y7 पद्याख्यम्. M1.3 एकं (M8 °तं) धनं (for अन्तर्धनं). — [d]) E5 तान्मति-; J1 तान्प्रतिपाद्य- (for तान्प्रति). E5 मानमुद्गत-; F5 (orig.) मानमुद्यत-; W4 X1 Y1c.v.2 मानमुज्झति. A जनाः; X1 Y1c.v.2 नृपः (for नृपाः). Y2 कस्मै; M8 किं तैः (for कस्तैः). Eo.1 F5 समं स्पर्धते; Y2 न स स्पर्धते (for सह स्प°).

BIS. 7371 (3346) Bhartṛ. ed. Bohl. 2. 13. Haeb. 11. lith. ed. I. 15, II and Galan 16. Prasaṅgābh. 9. Subhāsh. 304; Śp. 203 (Bh.); SRB. p. 39. 28 (Bh.); SBH. 3459 (Bh.); SRK. p. 32. 4 (Bh.); SHV. f. 30a (Bh.); SU. 1430 (Bh.); SN. 693; SSV. 751; SMV. 11. 5; SKG. f. 11b.

16 F1.4 order *cdab*. — [a]) Eo अतिगत-; G1 M3 अवगत- (for अधिगत-). J1 मानमंस्थान्; W2 नावमंस्थास्; X2 भावमंस्था; Y2 मा(t.v. ना)गमंस्थास्. — [b]) F2 तनु; J1 मनु; J2 Y2.6 G2.3 ननु (for लघु). M3 सा रुणद्धि. — [c]) E1 (before corr. in t. and c.) -मदलेख-; It -मदशोभा-; J2.3 Y2.4–8 T G1.4 M मदरेखा- (M3 °रेख्या-); G2.3 -मदधारा- (for -मदलेखा-). E2 -स्याम-; G2.3 -धौत-; M3 -ध्यान- (for -श्याम-). C J W1t.2t.4 (before corr.) X1 Y1B T2 G5 -गंडस्थलीनां; F2 -गंडस्थलाभां; H1c I -गण्डस्थलानां. — [d]) A B1 E H I Y2.3 बिशतंतुर्; W3t विषतंतुर् (for बिसतन्तुर्).

BIS. 227 (82) Bhartṛ. ed. Bohl. 2. 14. Haeb. 12. Galan 17. Pañc. I. 79. Subhāsh. 304; Śp. 197; SRB. p. 39. 26; SBH. 2933; SRK. p. 32. 5 (Bh.); Kāvyālaṁkāra of Rudraṭa 1; Padyaracanā (KM. 89, p. 115. 67, Bh.); SK. 2. 57; SU. 1429 (Bh.); SSD. 2. f. 109a.

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशाम्
आपन्नोऽपि विपन्नदीधितिरपि प्राणेषु गच्छत्स्वपि ।
मत्तेभेन्द्रविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥ १७ ॥

प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम्
असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः ।
विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १८ ॥

मनसि वचसि काये पुण्यपीयूषपूर्णास्
त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।

---

17 [a]) C जरार्दितोपि; F1.2.4 (the last two t.v. as in text) X Y4–6 G4 M1.3–5 जरान्वितोपि (for °कृशोऽपि). A3 Eo.2.3c.5 F1.4 X शिथिलप्राणोपि; F5 W1.20 विगत- (F5 °तः)प्रायोपि; Y3 शिथिलाः प्राप्तोपि (for शिथिलप्रायोपि). F2 X दीनां (for कष्टां). — [b]) H1t.2 Wc विभिन्न- (for विपन्न-). B2 C E3t F2.3 J W Y2.4–8 T G M नश्यत्स्वपि; Y3 शामत्स्वपि (for गच्छत्स्वपि). — [c]) B C D Y3 उन्मत्तेभ- (for मत्तेभेन्द्र-). B2 T3 -पलल-; D F3 W1t -दलन-; F2 J1.3 W3t X Y (except Y3) T1.2 G M -पिशित-; J2 -विशिखा-; T3t.v. -फलल- (for -कवल-). W4 -बद्धास्पृहः; T3 -बद्धः स्पृहः; M5 -बंधस्पृहः. — [d]) G1 M3 जीवन्; M5 जीर्णस् (for जीर्णं). Aot.1t.3 Eo–2.5 J1 X1 T2.3 केशरी (for केसरी).

BIS. 2027 (791) Bhartṛ. ed. Bohl. **2.** 22. Haeb. 13. lith. ed. I, II and Galan 29. Subhāsh. 304; Śp. 907 (Bh.); SRB. p. 230. 40 (Ratisena); SBH. 614 (Ratisena); SRK. p. 174. 1 (Śp.); ST. **16.** 1; Kāvyānuśāsana of Vāgbhaṭa **3** (KM. 43, p. 36); Padyaracanā (KM. 89, p. 102. 60, Bh.); SS. **54.** 5; SK. **3.** 206; SU. 1220 (Bh.); SSD. **2.** f. 35b.

18 Om. in ISM Kaḷaṁkar 195, and Mysore 582. Order *bacd* (to avoid sandhi across *ab*) in A3 B E I; *cabd* in H. — [a]) C J1.3 Y1A न्यायया; Y6 वन्या (for न्याय्या). Y8 वृत्तेर् (for वृत्तिर्). Y7 M1.3–5 असुभंगेषु (for °भङ्गेऽपि). — [b]) D F3 J W X Y4–8 T G M त्वसंतो; F1 Y1.3 ह्य संतो; Y2 क्व संतो (for असन्तो). G2 न ह्यर्थ्याः; M3 [ऽ]सामर्थ्याः (for नाभ्यर्थ्याः). Y1 सकृदपि (for सुहृदपि). J1 याच्य-; G4 (t.v. as in text) वाच्यः; M3 याञ्चः (for याच्यः). C Y7 कृशधनैः; It तनुधनः; J1 कृशधनं; Y2 कृतधनः (for कृशधनः). — [c]) F2 J1.3 X2 Y1–6 T2.3 G2–4 M1.2.4.5 स्थैर्यं; F3 Y7.8 T1B G1.5 M3 धैर्यं (for स्थेयं). — [d]) A3 °धारामृतम् (for °धाराव्रतम्).

BIS. 4354 (1922) Bhartṛ. ed. Bohl. **2.** 61. Haeb. 14. lith. ed. I. and III. 27. Galan 28. Subhāsh. 304; SRB. p. 52. 248 (Jayāditya); SBH. 280 (Jayāditya); SDK. **5.** 35. 4 (p. 301, Dharmakīrti); SRK. p. 14. 39 (Bh.); PT. **1.** 56; SSD. **2.** f. 93b; SSV. 417 (*bacd*); JSV. **182.** **3** (*bacd*).

19 Om. in Mysore KB 340. — [b]) X परहितम् (for त्रिभुवनम्). C H1t.v. पूरयंतः (for प्रीण°). — [d]) C Y1 (printed ed. only) विलसंतः (for विक°). Y7 संति ये ते; T3 ख्यापयंतः (for सन्ति सन्तः). A2 कियंतं (for कियन्तः).

परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ १९ ॥

इतः स्वपिति केशवः कुलमितस् तदीयद्विषाम्
इतश् च शरणार्थिनः शिखरिपत्रिणः शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकैर्
अहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ २० ॥

क्वचिद् भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं
क्वचिच् छाकाहारः क्वचिदपि च शाल्योदनरुचिः ।
क्वचित् कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम् ॥२१॥

BIS. 4691 (2106) Bhartṛ. ed. Bohl. **2.** 71. Haeb. 15. lith. ed. I. 77, II and Galan 79. Prasaṅgābh. 9. Subhāsh. 304; SRB. p. 51. 221; SRK. p. 18. 76 (ST.); SS. **26.** 10; PT. **1.** 60; SG. f. 10b (Bh.); SSD. **2.** f. 93b; SSV. 426; JS. 71; SKG. f. 20b, 22a.

20 [a]) Aot D इति (for इतः). D Est $J_1$ W $Y_{3.7}$ $G_3$ स्वपति (for स्वपिति). — [b]) $Y_{2.5.6.8}$ $T_1$ शरणार्थिनां (for °र्थिनः). C D $F_2$ $J_3$ **S** (except $W_1$ $X_1$) शिखरि( $Y_8$ °र)णां गणाः ($G_4$ °णः परा-); $J_1$ शिखरिपत्रिगाः. — [c]) A $B_2$ E $H_{1c}$ I $X_1$ इतश्च (for इतोऽपि). $G_1$ $M_3$ सह समस्तकैवर्तकैर्; $G_4$ सकलभूतसंवर्तकस्. — [d]) $G_4$ त्वहो (for अहो). $F_1$ विभवमूर्जितं; $H_{1c.v.}$ विततमूर्छितं; $J_1$ विरतमूर्जितं; $J_2$ त्रिदितमूर्जितं. $G_4$ $M_5$ परसहं; $M_4$ वरसहं (for भरसहं). $Y_7$ हि (for च).

BIS. 1095 (419) Bhartṛ. ed. Bohl. **2.** 68. Haeb. 16. lith. ed. I. 75. Galan 77. Subhāsh. 305; Śp. 1093 (Bh.); SRB. p. 216. 25 (Bh.); SBH. 886; SRH. **168.** 41; SRK. p. 195. 9 (Bh.); Com. on Sarasvatīkaṇṭhābharaṇa **4.** 49; AMD. 818; SSD. **2.** f. 80a.

21 [a]) Ec भूमौ शय्याः; $J_1$ $G_1$ M भूमौ शायी; $Y_{4.5.7}$ T पृथ्वीशय्यः ($T_3$ य्या); $Y_6$ $G_{2.8}$ भूमौ शेते (for भूमौ शय्या). B Eo (and Ec) $F_2$ $J_{1.3}$ X $Y_{2.4-7}$ $T_3$ G M पर्यंकशयनः; $W_2$ °शयने. — [b]) $F_3$ $J_2$ $G_3$ शाखाहारः; $J_1$ W $Y_{2.3}$ $G_1$ $M_{1-3}$ शाकाहारी; $X_2$ शोकाहारः (for शाकाहारः). $F_3$ शाल्यौदनरुचिः; $F_4$ मिष्टाशनरुचिः. — [c]) $H_{1t.2}$ $J_1$ कंथामाली; $J_2$ कंधापूरी; X कंथाधारः; $G_3$ $M_{1-3}$ कंधाधारी. C $W_{2-4}$ चित्रांबरधरो; $Y_2$ दिव्यांबरधनो (for °धरो). — [d]) $B_1$ गणयति च; D $F_{2-5}$ I $J_{2.3}$ **S** (except $X_2$) न गणयति; $E_3$ न गयति (for गणयति न). $W_2$ transp. दुःखं and सुखम्.

BIS. 1987 (772) Bhartṛ. ed. Bohl. **2.** 79. Haeb. 18. lith. ed. I. 80. Galan 82. Śatakāv. 80. Subhāsh. 305; Śp. 4098 (Bh.); SRB. p. 369. 39 (Bh.); SBH. 2940 SKM. **7.** 10; SRH. **168.** 40; VS. 350 (Bh.); SHV. f. 71a (Bh.), 87a; SS. **64.** 1; SK. **7.** 32; SMV. **8.** 12; JSV. **168.** 5 (*var, bacd.*).

नमस्यामो देवान् ननु हतविधेस् तेऽपि वशगा
　विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किमपरैः किं च विधिना
　नमस् तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ २२ ॥

दौर्मन्त्र्यान् नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालनाद्
　विप्रोऽनध्ययनात् कुलं कुतनयाच् छीलं खलोपासनात् ।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयान्
　मैत्री चाप्रणयात् समृद्धिरनयात् त्यागात् प्रमादाद् धनम् ॥२३॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
　शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि ।

---

22 [a]) B2 E3c F5 M4.5 देवान्न तु; D Y1c.v.3 देवाननु; E3t देवा न तु; X2 दवोः मनु; M3 दैवान्न तु (for देवान्ननु). (Y1 com. देवान् + अनु = अन्विति पश्चात्). W2–4 Y2 हित-; X Y1 G1 M बत (for हत-). Y2 तेपि वशजाः; G1 M1–3 सत्त्वविवशा. — [b]) Y7 विधिर्मध्यः. C -कर्मात्त-; G1 M3 -रत्तैक- (for -कर्मैक-). — [c]) J1 M5 कर्मायुक्तं (for °यत्तं). B1 यदि****; B2 C E F1.3.4 H I J1.2 X Y1.3 G2.3 यदि किममरैः; D तदपि किममरैः; W किममरगणैः; G1 M1–4 यदिदमपरैः (for यदि किमपरैः). J2 च न विना; Y2 हि विधिना; G4 नु विधिनो (for च विधिना). — [d]) D E0.2t.3 I J3 G3 M5 तत्कर्मेभ्यो; M3 स्तात्कर्मेभ्यो; G4 कर्मभ्यो (for तत्कर्मभ्यो).

BIS. 3367 (1431) Bhartṛ. ed. Bohl. and lith. ed. I. **2**. 92, II. 94, III. 93. **Haeb.** 20. Galan 96. Subhāsh. 305. Śāntiśataka **1**. 1 (Haeb. p. 410); Śp. 436 (Bh.); SRB. p. 93. 88 (Bh.); SBH. 3079; SRH. **34**. 24. (Kāvyaprakāśa); SRK. p. 71. 11 (Bh.); Yaśastilakacampū of Somadeva (KM. 70, II. p. 256); SHV. f. 62a, 78**a**; SN. 798; SSD. **4**. f. 5a; SSV. 22; JSV. **262**. 3.

23 Om. in Punjab 2885. — [a]) F4 It दुर्मंत्रान् (for दौर्मन्त्र्यान्). W2.3 सती (for यतिः). — Portions before caesura of third and fourth quarters are transposed in D E F1.3.5 I Y3. — [c]) B1 C F5m.v. I स्त्री मद्याद्; E (E1t.v. and c.) स्त्री गर्वाद् (for ह्रीर्मद्याद्). C अनवीक्षणाद्; Y7 M2.4 अनपेक्षणाद्. E1t.v. विदेशांतरान् (for प्रवासाश्रयान्). — [d]) E1.2t वा (for च). B2 E1 H1t T3 अनयात्त्याग-; Y1B अनयात्त्यागा-; G3 अनयत्यागात्. Y2 प्रत्रासाद् (for प्रमादाद्).

BIS. 2991 (1260) Bhartṛ. ed. Bohl. **2**. 34. Haeb. 21. lith. ed. I. 41, II. 42. Galan 46. Pañc. ed. Koseg. I. 185. ed. Orn. 135. ed. Bomb. 169. Kavitāmṛtak. 51. Prasaṅgābh. 16. Subhāsh. 107; Śp. 1533; SRB. p. 178. 1010; SBH. 2945; SRH. 181. 55 (Bh.); SRK. p. 240. 92 (Bh.); SHV. f. 96a. 71–72; PT. **9**. 131; SSD. **2**. f. 153b.

24 [a]) Y4.6.8 T G4 व्रतशुचौ; M4.5 व्रतपरे (for °रुचौ). J1.3 Y2 G1.4 M डंभः; G2 (orig.) दर्भः (for दम्भः). T3 कुचौ (for शुचौ). — [b]) E0.1.2t सूरे (for शूरे). E0 °निर्घृणिता. (E3 com. निर्घृणता = निर्दयिता). [To avoid hiatus] B D E2 F3 H I J1c.2.3 X [आ]र्जवे; J1t जडे; W Y1.2.4.5.7.8 T G1.2.5 M1–3 मुनौ; Y3 रुजे; Y6 गुरौ; G4

तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत् को नाम गुणो भवेत् स गुणिनां यो दुर्जनैर्नाङ्कितः ॥२४॥

जातिर्यातु रसातलं गुणगणस् तस्याप्यधो गच्छतां
शीलं शैलतटात् पतत्वभिजनः संदह्यतां वह्निना।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास् तृणलवप्रायाः समस्ता इमे ॥ २५ ॥

भग्नाशस्य करण्डपिण्डिततनोर्ग्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः।

---

मतौ (for ऋजौ). X कुमतिता (for विम°). — [c]) C Eo J3 X2 Y2.7.8 T1 G4.5 M1-4 वक्तव्यशक्तिः; D वक्तर्यशस्तिः; X1 वक्तिमशक्तिः (for वक्तर्य°). J1 Y7.8 स्थिते; G4 स्थितौ (for स्थिरे). — [d]) X2 तत्कर्मानु- (for तत्को नाम). B1 G3t गुणोभवत्; G4 गुणी भवेत्; M3 भवेद्गुणः (for गुणो भवेत्). C समस्त- (for भवेत्स). B Eo.1.5 F2 J3 W X2 Y1.3.7 G1.4 M सुगुणिनां; F3 स गुणो सर्वगुणिनां (for स गुणिनां). W4 दुर्जयैर्नाकितः; Y2 M2 दुर्जने नांकितः; G1 M1.3 दुर्जनानां मतः; G4 दुर्जने नांचितः; M4.5 दुर्जनानां गुणः (for दुर्जनैर्नाङ्कितः).

BIS. 2375 (954) Bhartṛ. ed. Bohl. 2. 44. Haeb. 23. lith. ed. I. 53, II 54. Galan 58. Śatakāv. 80. Subhāsh. 306; SRB. p. 61. 263 (Bh.); SBH. 464 (Bh.); SKM. **8**. 34; SRK. p. 26. 54 (ST.); SK. **2**. 113; SG. f. 21b; SSD. **2**. f. 131b; SSV. 525; SMV. **10**. 28.

25 [a]) F1 जातु; Y7 याति (for यातु). Ec G1t.v. गुणगणास्. X1 गुणगुणस्. B H तस्मादधो; F3 J Y2.4-8 T G3-5 तत्राप्यधो (for तस्याप्यधो). A3 B E2t I गच्छतु; F1 नीयतां; H J Y4-8 T3 G2 M4.5 गच्छताच्; G5 गच्छतः (for गच्छतां). — [b]) Y7 शैलतटं; M4.5 शैलतटीं (for °तटात्). D पतत्यभिजनैः; G4 पतत्वभिजनाः. — For 25[ab], C reads:

शीलं शैलतटात्पतत्वभिजनो निर्दह्यतां वह्निना
मा श्रौषं जगति श्रुतस्य विफले क्लेशस्य नामाप्यहम्।

— [c]) F1 G4 शौर्यं (for शौर्ये). F1 वारिणि (for वैरिणि). A3 निपतितत्वर्थोस्तु; B1 पतताद‍र्थोस्तु (for निपतत्वर्थोऽस्तु). C मे सर्वदा (for नः केवलं). — [d]) T3 ह्येकेनैव (for येनैकेन). C -बुस-; G1 M3 -लघु- (for -लव-). D F3 J Y (except Y3) G2-5 M1.2.4.5 अमी; G1 M3 अपि (for इमे).

BIS. 2388 (965) Bhartṛ. ed. Bohl. 2. 32. Haeb. 24. lith. ed. I. 38, II. 39. Galan 42. Śatakāv. 81. Subhāsh. 65; Śp. 332 (Bh.); SRB. p. 64. 15 (Bh.); SBH. 3073 (var. Māgha); SKM. **125**. 9 (Bh.); SRK. p. 44. 9 (Bh.); ST. **41**.11; Padyaracanā (KM. 89, p. 111. 40, Bh.); VS. 299 (Bh.); SHV. f. 66b (Bh.) and 82a; SS. **39**. 12; SK. **2**. 174; SU. 1515; SSD. **2**. f. 105a; SMV. **4**. 6.

26 [a]) Y2 भग्नायस्य. A2.3 B1 D E5 F4 H2 (m.v. as in text) W X Y1.3 पीडिततनोर् (X °नुर्). [Ao.1 com. पिंडिततनोः कहतां सरीर संकुडाणौ छइ]. B1 E3t F1-4 H J **S** म्ला (M3 मा)नेन्द्रियस्य (for ग्लाने°). — [c]) C वक्त्रे सुखं (for नक्तं मुखे). — [c]) W4 तृप्तस्यात्पिपिसितेन. F1 M3.4 तत्क्षणमसौ (M3 °हो) (for सत्वरमसौ). F2 तथा (for पथा). — [d]) F5 सुस्थास्तिष्ठत; W (Wc as in text) लोकाः पश्यत; Y1

तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास् तिष्ठत दैवमेव हि नृणां वृद्धौ क्षये चाकुलम् ॥२६॥

दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ २७ ॥

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस् तदभवद् दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस् त्वीदृशी ॥ २८ ॥

---

स्वस्थस्तिष्ठति; M5 स्वस्थं तिष्ठत. I शरणं; J Y1.4–8 T G (except G4) M1.2.4.5 हि परं; M3 जगतां (for हि नृणां). C वृद्धौ परं; J1 G2 वृद्धिक्षये; J2 वृद्धौ क्षणे; W4 वृद्धक्षये. C D F J S (except Y6) कारणं (for चाकुलम्). I (c.v. as in text) धिग्धिग्वृथा पौरुषं.

BIS. 4528 (2012) Bhartr. ed. Bohl. 2. 92. Haeb. 25. lith. ed. I. 83, II. 85. Galan 88. Pañc. ed. Koseg. II. 88. Śuk. 6 (Pet. Ms. 13b). Subhāsh. 107 and 306. Vikramacaritra 177; SRB. p. 94. 109; SBH. 3143; SDK. 5. 71. 2 (p. 324); SRK. p. 71. 12 (Bh.); SHV. f. 64a (Bh.) and 80a; SN. 802; SSD. 4. f. 2b; SSV. 284; SMV. 8. 15; JSV. 264. 8.

27 [b]) B D E F2 H I W भूषितोपि सन्; F4.5 [अ]लंकृतो यदि; X1 °कृतोप्यसन्. J1 lacuna for यालंकृतोऽपि सन्. — [c]) F5 नागः (for सर्पः).

BIS. 2850 (1180) Bhartr. ed. Bohl. 2. 43. Haeb. 30. lith. ed. I. 52. Galan 56. Galan var. 82. Hit. ed. Schl. I. 75. ed. Johns. 90. Subhāsh. 89, 306. Cāṇ. (Haeb. p. 25, Hoefer 314. Troyer 73). Rājataraṅgiṇī I. 324. Saṁskṛtapāṭhop. 55; Śp. 354; SRB. p. 55. 70 (var. Cāṇakya); SBH. 355 (Vālmīki); SRH. 32. 24 (Sarasvatīkaṇṭhābharaṇa); ST. 3. 30; SA. 27. 51; VS. 378 (Cāṇakya); SK. 2. 118; SU. 1577; PT. 8. 1; SSD. 2. f. 129a; SSV. 517; SMV. 10. 7; JSV. 198. 8.

28 [a]) J1 क्षीरेणात्मगतो****; Y3–5 G2.3.5 -गतोदके (Y3 °को) ननु (for -गतोदकाय हि). C T2 हि पुरा; E2 H सकला (for हि गुणा). C T2 गुणास्तेखिलाः; E3 H1t (com. as in text).2 निजा ये गुणाः; J1 निजास्ते किल; Y2 T3 G5 निजास्तेखिलाः; G1 M पुरा स्वे (M4.5 ये) खिलाः. — [b]) C F5 J1.3 X2 Y2.6–8 T1 G1.2.4 M1–4 क्षीरो (M4 °रा) तापम्; E3t क्षीरं तापम्; Y4 क्षारे तापम्. E2t अवेत्य; X अवीक्ष्य; T3 अपेक्ष्य (for अवेक्ष्य). B1 E F3.5 H J W Y2.7 G2.3 M4.5 ह्यात्मा; C I [अ]प्यात्मा (for स्वात्मा) [Original may have been *आत्मा (with hiatus) after caesura]. Y3 हृतः (for हुतः). — [c]) C Y7 G4t.v. उन्मुखं; E2.3 Y3 G1t.v. M3–5 उन्मनास्; G1 उन्मुखास्; G4 उन्मुनस् (for उन्मनस्). E3 समभवद् (for तद°). A E0t.1.2 F5 G2t दृष्ट्वा नु; E3 दृष्ट्वात्म-; I दृष्ट्वा स्व- (for दृष्ट्वा तु). — [d]) X1 मुक्तं; M3 यत्तं (for युक्तं). X Y1 तच्च (for तेन). J2 तास्यति (for शाम्यति). B1 पुनर्; B3 पयो; Ec -तमां (for सतां). A C E2 W पुनस्तादृशी; B सतामीदृशी; D पुनस्त्वादृशी; F5 Y5 G2.3 -गुणस्त्वीदृशः; J1 ***दृशी; X Y3 -गुणास्त्वीदृशः; Y2 G1.4 M3 -गुणास्त्वीदृशाः; Y4 पुनस्त्वीदृशः; G5 पुरा त्वीदृशी; M2 -गुणस्त्वीदृशी.

BIS. 2026 (790) Bhartr. ed. Bohl. 2. 67. Haeb. 31. lith. ed. I. 74, II and Galan 76. Subhāsh. 306; SRB. p. 88. 20; SRK. p. 55. 11 (Bh.); SHV. f. 73a. 810 (Bh.); SS. 42. 2; SSD. 2. f. 113a; SMV. 13. 20; SKG. f. 17a.

या साधूंश् च खलान् करोति विदुषो मूर्खान् हितान् द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय चक्रिकां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो त्वमतो गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥२९॥

कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन् नरास्थि निरामिषम् ।
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते
न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥ ३० ॥

29 Om. in BORI 326. — [a]) Y8 बंधूंश् (for साधूंश्). Ao–2 खलवत्; C I प्रखलान्; F3.4 हि खलान्; J3 च बलात्; W1t स खलान्; W4t शकलान्. J1 या या साधुश्च बलात्करोति; J2 या *** खलान्करोतु. D विदिशो; Y7 विदुषां (for विदुषो). J2 मुख्यान् (for मूर्खान्). — [b]) X2 प्रत्यक्षे (for प्रत्यक्षं). — [c]) C D F3.5 (orig.) Y3 चंडिकां; F1.2 शांकरीं; F4 वक्रतां; F5 (by corr.) वक्त्रिकां; J2 भक्रतां; W X Y1.2.4–8 T G M सत्क्रियां (for चक्रिकां). [Ao.1 com. चक्रिकां भगवतीं = कालचक्ररूपिणीं प्रकृतिरूपभवानीं; B com. चक्रिका = राजमण्डली; E com. चक्रिकां = चक्रेश्वरीं; F5 (marg.) वक्त्रेव वक्त्रिका = सरस्वती; H com. and I com. चक्रिकां = चक्रेश्वरीं सरस्वतीं; J1 com. चक्रिकां = समस्तफलसमूहवल्लुल्कंथा; W com. also gives अथ वा विपरीतं अस्मिन्मोहाब्धौ गुणेषु आस्था मा कृथा मा कुरु च[व]क्रियां भगवतीमाराधय च[व]क्रेण विना अस्मिन्गुणे फलं न भवति] Y4.5 भोक्तुः (for भोक्तुं). — [d]) F5 मोहाब्धौ (for हे साधो). B F5 G2.4 व्यसने; D त्वमृतो; E3 F3.4 J W Y2.4–8 T G1.3.5 M व्यसनैर् (for त्वमतो). A3 F2 विकलेषु; C D Eo–2.5 F1.4 J3 X Y1.8 G3t M1–4 विफलेषु (for विपुलेषु). J1 विफलैः प्वास्थां; M5 विपुलैष्वास्थां. [पु = फ in older Devanāgarī] E3 H2 W1.4 X2 Y7 [आ]स्था (for [आ]स्थां). J2 वृथां.

BIS. 5499 (2487) Bhartṛ ed. Bohl. and lith ed. I. 2. 96. Haeb. 32. lith. ed. II. 98. Galan 100. Subhāsh. 307; SRB. p. 93. 97; SBH. 3074 (Śrīvardhana); SRK. p. 76. 8 (ST.).

30 [a]) C F1–3 J1.3 W2–4 X2 Y1t.2.3.7 T1A.2.3 G4 क्रिमि- (for कृमि-). B1 -दितं; J2 -बिडं; G1 M3 -शतं (for -चितं). C लालापूर्णं. J3 Y2 T3 M1 कुगंधि; W1–3 विगर्हितं (for विगन्धि). — [b]) D E3t F3 J2 W (W4 orig. and c) Y3 G1–3 M1–3 निरुपमरसं; J1 विरुपमरस-; X Y1 अनुपमरस-. B2 F3.4 H J Y3 स्वा(H1c आस्वा)दन्; F5 [आ]स्वाद्य (for खादन्). I (by corr.) Y3 निरास्थि; W4t X Y1.6.7 T1.2 G5 खरास्थि (for नरास्थि). — [c]) J3 M5 पार्श्वस्तं. Ao–2 F1.2.4 J1.3 च शंकते; E3t न शंसते; H1 (c.v. as in text).2 Y4.5 G2.3 विशंकते; J2 lacuna (for न शङ्कते). — [d]) B1 J1.3 न हि गुणयति; Eo–2.5 Y1 गणयति न हि; W4 X2 न हि गणपति; G3 विगणयति न (for न हि गण°). F5 सुद्रो (for क्षुद्रो). A1.2 B2 F4 H X1 मैत्री- (for जन्तुः).

BIS. 1894 (728) Bhartṛ. ed. Bohl. 2. 9. Haeb. 33. lith. ed. I. 8. Galan 11. Śatakāv. 82. Nītisaṁk. 65. Subhāsh. 307. Śāntiś. 2. 8; SRB. p. 177. 997; SDK. 5. 68. 5 (p. 322, Śūla); SRK. p. 34. 6 (Bh.); SSD. 2. f. 132b.

पापान् निवारयति योजयते हिताय
गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ३१ ॥

मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ ३२ ॥

संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।

31 [a]) B2 H2 W1 Y2 पापं (for पापान्). G1 (t.v. as in text) यो यतते (for योजयते). Y7 विहाय; M2 हितानि; M4 हितं ये (for हिताय). — [b]) B1 C F5 H J W X2 Y3–6 गुह्यं च गूहति; D दोषं च गूहति; F2 गुह्यत्वगुह्यति; F3 दोषांश्च गूहति; X1 गुह्यं च गुह्यति; Y1.2 G1 M4.5 गुह्यानि गूहति; G3t गुह्यं च गूहयति; M3 गुह्यान्निगूहति. — [c]) W3.4 आपद्गते. T8 om. च. W2 [ऽ]पि पुरुषे न; Y3 च निजहाति; Y4.5 G2.3 न विजहाति (for च न जहाति). A2 om. ददाति. E1 (orig.) तथापि; W2.4 जहाति; Y1 तदाति (Y1A ददाति as in text). — [d]) B2 J1t Y8 तन्मित्र- (for सन्मित्र-).

BIS. 4060 (1771) Bhartṛ. ed. Bohl. **2**. 64. Haeb. 35. lith. ed. I and III. 71. Kavitāmṛtak. 25. Prasaṅgābh. 13. Subhāsh. 307; SRB. p. 88. 18; SK. **6**. 9; SSD. **2**. f. 113a; JSV. **214**. 11.

32 [b]) E5 °विहीत°; F2 J2 °निहित°; T3 °निहीन° (for °विहित°). — [c]) D F5 X2 T1A G3.4 M1–4 °पिशुनानां; W2.4 °पिशुनो (for °पिशुना). — [d]) A0–2 B1 E0–3 F3 I J1 निःकारण(F3 °णं)वैरिणो; E5 F2 J3 **S** (except W3 X Y3.4.6) निष्कारणमेव वैरिणो; F5 निष्कारणं वैरिणो. G4 भवंति (for जगति).

BIS. 4931 (2234) Bhartṛ. ed. Bohl. **2**. 51. Haeb. 36. lith. ed. I and II. 60. Galan 64. Subhāsh. 307; SRB. p. 57. 136 (Bh.); SBH. 422 (Bh.); SRK. p. 27. 56 (Bh.); Sūktāvalī; Alaṁkārakaustubha (KM. 66, p. 314, second half only). Kāvyānuśāsana of Vāgbhaṭa **3** (KM. 43, p. 41); SA. **26**. 60; VS. 884 (Bh.); SS. **27**. 9; SK. f. 146b; SSD. **2**. f. 159b; SSV. 518.

33 Order in A3 is *acbd*. — [a]) D F3 J **S** (except W) श्रूयते (for ज्ञायते). — [b]) M5 बिसिनी° (for नलिनी°). D J Y2.4–8 T G1–3.5 M1.2 दृश्यते; G4 जायते; M3–5 लक्ष्यते (for राजते). — [c]) D F W X Y1.3 G4t.v. स्वात्यां; J Y2.4–8 T G M अंतः- (for स्वातौ). A3 °सूक्तिसंपुटगतं; C D F I J3 W Y2.3.6.7 T G3t.4.5 M4 °शुक्तिमध्यपतितं; J1.2 Y4.5 G1.2.3c M1–3.5 °शुक्तिकुक्षिपतितं (for °शुक्तिसंपुटगतं). C D F3 J W1t.4t Y2–8 T G M तन्मौक्तिकं जायते; F5 Wc मुक्ताफलं जायते; W2.3 तन्मौक्ति संजायते (for तज्जायते मौक्तिकं). — [d]) A C D E0.1.2t.5 F1.3 W2 -गुणः (for -गुणाः). A3 C D F1–4 W (com. gloss or reading) X Y1 संसर्गतो (for संवासतो). E3 संवासतो (gloss संसर्गतो). H X Y1 देहिनां; W1 ज्ञायते (for जायते). F5 I प्रायेणोत्तममध्यमाधमगुणाः (I °णः) संसर्गतो भूयते (I संवासतो जायते); J Y2–8 T G M प्रायेणाधममध्यमोत्तमजुषामेवंविधा वृत्तयः.

स्वातौ सागरशुक्तिसंपुटगतं तज् जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणाः संवासतो जायते ॥ ३३ ॥

कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ३४ ॥

मौनान् मूकः प्रवचनपटुर्वातलो जल्पको वा
धृष्टः पार्श्वे भवति च तथा दूरतोऽप्यप्रगल्भः।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ३५ ॥

BIS. 6781 (3152) Bhartṛ. ed. Bohl. **2**. 57. Haeb. 37. lith. ed. I. 66, II. 67. Galan 69. Pañc. ed. Koseg. I. 280. ed. Bomb. 250. Subhāsh. 105; Śp. 330 (Viṣṇuśarman); SRB. p. 87. 33; SA. **24**. 17; Padyaracanā (KM. 89, p. 111. 38, Bh.); SS. **29**. 2; SK. **2**. 187; SU. 1464; SSD. **2**. f. 125b; SSV. 654; SMV. **9**. 51; JSV. **177**. 6; SKG. f. 13a.

34 $F_5$ substitutes मालतीकुसुमस्येव. — [a]) $B_2$ X $G_3$ $M_4$ [ए]व (for [इ]व). — [b]) C $T_{1c.v.}$ $M_1$ द्वे गती हि; J $Y_3$ $T_2$ $M_{3-5}$ द्वे गती तु; $W_2$ $Y_2$ द्वे गती च; $X_1$ द्वे गती सु- (or तु); $Y_1$ द्वे गती स्तो; $T_3$ द्वेधा वृत्तिर्; $G_1$ द्वे हि वृत्तिर्; $M_2$ द्वे हि वृत्ती (for द्वयी वृत्तिर्). $X_1$ $Y_1$ मनस्विनां (for °स्विनः). — [c]) $W_{2.3}$ मूर्धनि (for मूर्ध्नि वा). $E_{3t}$ $F_3$ -लोकानां (for -लोकस्य). — [d]) $E_{ot}$ $H_2$ शीयते; $E_{3t}$ स्थीयते; $G_{2.3.5}$ जीर्यते (for शीर्यते). $J_2$ $F_4$ $W_1$ (by corr.)$_{.3}$ विशीर्येत वनेथ वा; $W_1$ (orig.)$_{.2.4}$ (orig.) विशीर्येत वने यथा.

BIS. 1845 (708) Bhartṛ. ed. Bohl. **2**. 25. Haeb. 39. lith. ed. I. 33, 102, II and Galan 33. Hit. ed. Schl. I. 126. ed. Johns 141. Subhāsh. 308; Śp. 264 (Bh.); SRB. p. 79. 4 (Bh.); SBH. 201 (Ravigupta), and 509; SKM. **7**. 2 (Bh.); SRH. **102**. 2; SRK. p. 48. 9 (Śp.); SA. **24**. 46; ST. **43**. 22 (Bh.); Garuḍamahāpurāṇa **110**. 13; SHV. f. 71a (Bh.), 87a; SM. 1572; SSV. 1544; JSV. **168**. 2; SKG. f. 17a.

35 Order in A C, is *acbd*. $W_3$ reads st. 35 twice. — [a]) $J_3$ मंदान्मूकः. $A_3$ $H_{1c}$ It वातकी; $B_1$ $F_{1.2.5}$ W वातुलो; D वातुकी; $E_2$ $F_4$ जल्पको; $F_3$ $Y_{3.6.8}$ T $G_{1.4}$ M वाचको; $H_{1t.2}$ Ic वातको; $J_{1.2}$ पित्तको; X $Y_1$ चाटुलो; $Y_{2.4.5.7}$ वादको; $G_{2.3.5}$ वातिको (for वातलो). $E_2$ वातलो; $F_4$ वातुलो (for जल्पको). — [b]) $H_{1m.v.}$ $J_3$ $Y_7$ $T_3$ $M_2$ दृष्टः; $J_1$ दुष्टः; $W_4$ घृष्टः; $Y_{4.5}$ $G_{2.3}$ धृष्णुः (for धृष्टः). B $Y_{1.7.8}$ $G_1$ $M_{1-3}$ वसति च; C भवति न; $W_{1-3}$ प्रभवति (for भवति च). $G_4$ निवसन् (for च तथा). $W_{1-3}$ $J_3$ तदा; $Y_1$ सदा; $Y_{2.4-6.8}$ T $G_{2.3.5}$ $M_{4.5}$ वसन् (for तथा). B C D $E_3$ $F_5$ H W $Y_3$ दूरतश्चाप्रगल्भः; $E_{o-2.5}$ दूरतश्च प्रमादी; I X ($X_2$ lacuna) दूरतश्चाप्रमादी; $M_4$ दूरतस्य प्रगल्भः; $M_5$ दूरगोप्यप्रगल्भः. (E com. प्रगल्भः कथ्यते वा प्रमादी कथ्यते). — $J_1$ lacuna for $35^{cd}$. — [c]) $A_{o.1}$ $E_{o.1.3}$ प्रायसो. $E_3$ नातिजातः; $T_3$ नाभिजाने (for °जातः).

BIS. 4987 (2257) Bhartṛ. ed. Bohl. **2**. 48. Haeb. 40. lith. ed. I. 57, II. 58. Galan 61. Hit. ed. Schl. II. 26. ed. Johns. 25. Vet. in LA (III) 29. Subhāsh. 308. Pañc. I. 285; SRB. p. 97. 15; SDK. **5**. 42. 1 (p. 305); SRK. p. 109. 11 (Bh.); SL. f. 55b; SM. 1663; SN. 871; SSD. **2**. f. 146a; SSV. 1622; SMV. **20**. 5; JS. 513.

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान् गुणान् ख्यापयन्तः
स्वार्थान् संपादयन्तो विततपृथुतरारम्भयत्नाः परार्थे ।
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान् दुर्मुखान् दूषयन्तः
सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः॥३६॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत् तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं जनैः स्वमहिमा यद्यस्ति किं मण्डनैः
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ ३७ ॥

---

36 Om. in NS2. — a) B F1.2.4 (t.v. as in text) J M4.5 नुतिभिः (for कथनैः). Y1B स्वागुणान्. F3 W3t ज्यापयंतः; W2.3c.4 स्थाप°; Y1c वाच° (for ख्याप°). — b) B कुर्वंतः स्वीयमर्थं; F1.2.4 (t.v. as in text) G1 M पु(F2 मु)ष्णंतः स्वीयमर्थं; H It स्वार्थं संपादयंतो. B Y7.8 G1 M सतत-; F2 विवृत-; Y3 वितथ-; G4 विविध- (for वितत-). A8 X Y1 -बहुतरा°; B Y8 G1 M1–3 -कृतमहा°; E3t F5t.v. -पृथुफला°; W2.4 -प्रियतरा°; G2t -परधना°; M4.5 -कृतसमा° (for -पृथुतरा°). F4 -रंभयत्नैः; It -रंभयित्वा (for -रम्भयत्नाः). F5 J1 परार्थैः; I परार्थान्. — c) A2 क्षांतौवाक्षेप-; B C D E5t H क्षांत्यैवोपेक्ष्य (E5 °क्ष); Eot.1t क्षांत्यैवापेक्ष्य-; F4 W3.4 क्षांत्यैवक्षेप- (F4m.v. °वानेक-); J1 क्षांत्येवाक्षेप- (for क्षान्त्यैवाक्षेप-). W1.3.4 -रूक्षाक्षर-; J1 -रूपाक्षर- (for -रूक्षाक्षर-). W4 om.; M3–5- परुष- (for -मुखर-). D F3 Y (except Y1c.3) T G M दुर्जनान् (for दुर्मुखान्). Ao–2 दूषयंतः कियंतः; W2–4 दूषयंतः समंतात् (for दुर्मुखान्दूषयन्तः). B धर्षयंतः; C D F4t.v. I J2.3 Y2.4.5.7.8 T G M1–3 दुःखयंतः; J1 दुर्जयंतः; Y6 दूरयंतः; M4.5 पीडयंतः (for दूषयन्तः). — d) E3 F2.3 G2 चाश्चर्य-; H1c स्वाश्चर्य-; W2t.3t.4t [ऽ]प्याश्चर्य-; G4 त्वाश्चर्य- (for साश्चर्य-). B2 Eo.3t W4c X2 -वर्याः; F4m.v. -भूताः (for -चर्याः). (E com. generally चर्य (Eoc.3c वर्य) = सौंदर्य). X बहुमतो. C It J1.3 Y7 T3 G1 M2.3 नाभ्यर्थनीयाः. B त्रिभुवनभवने वंदनीया जयंति; M4.5 सदसि बहुमताः के(M5 क)स्य न स्युर्नमस्याः (for जगति बहु° etc.).

BIS. 3379 (1434) Bhartṛ. ed. Bohl. 2. 59. Haeb. 41. lith. ed. I. 68, II. 70. Galan 71. Prasaṅgābh. 11. Subhāsh. 308; SRB. p. 53. 277; SBH. 286; SRK. p. 18. 75 (Śp.); SSD. 2. f. 92b; SSV. 430.

37 A3 order *bacd*; F5 *bcad*. — a) Ao–2 स्नेहगुणेन; G1 चेत्सुगुणेन (for चेदगुणेन). J1 पिसुनता. F3 पावकैः (for पातकैः). C लोभश्चेति गुणेन किं सुखशतैर्यद्यस्त्यनायत्तता. — b) E1 तपसापि. I Y3 तीर्थैश्च. — c) Omitted in W3. A3 B E (E5c) F5 H I J X1.2 (by corr.) Y1c.v.4.5 T3 G2c.3 निजैः; C हितैः; D F1.2.4 Y1.6.8 M4.5 गुणैः; Y7 बलैः; G2t चनै (sic); M3 धनैः (for जनैः). A3 तु; C E5t F5 H J2 W (W3 om.) Y3.6.8 T3 G1 M1–3 सु-; I श्व- (for स्व-). Y2 सौजन्यं स्वजनेन किं सुमहिमा; T1.2 सौजन्यं यदि किं बले(T2 जने)न महिमा (before caesura). — d) H2m.v. धनैपरयशो. X यद्यस्तु (for °स्ति).

BIS. 5881 (2686) Bhartṛ. ed. Bohl. 2. 45. Haeb. 42. lith. ed. I 54, II. 55. Galan 57. Ṣaḍratna 6 (Haeb. p. 5). Kāvyakal. 6. Kāvyas. 3. Nītisaṃk. 26. Prasaṅgābh. 10. Subhāsh. 221; Śp. 1553; SRB. p. 178. 1015 (Amaruka); SRK. p. 240. 93 (Bh.); Cāṇakyanītidarpaṇa 17. 4; SA. 27. 44; SHV. app. I. f. 9a. 38; SS. 35. 6; PT. 9. 158; SSD. 2. f. 156b; SSV. f. 85b. 84 (*bacd*); JS. 644.

अम्भोजिनीवनविलासनिवासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ ३८ ॥

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन् देशमनातपं विधिवशाद् बिल्वस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस् तत्रैव यान्त्यापदः ॥ ३९ ॥

---

38* Om. in NS2. Extra in NS1. Punjab 2101 on margin of f. 5a as N44. — a) F2 J1 W X Y2 अंभोजनी-. A3 -विलासविनोदमेव; B C D E F1-3 H I J2.3 W (W4 orig.) X Y1-3 -निवासविलासमेव (D °ससौख्यं); F5 -विलासनमेव हंत; W4 (by corr.) Y6.8 T1.2 -विहारविलासमेव; G5 -विलासविहासमेव: M5 -विलासिनिवासमेव. — b) W4 हंतस्य (for हंसस्य). E1t (and Ec) हंत; G1 हंतु (for हन्ति). C सुतरां (for नितरां). Y3 बलवान्; M3 कवितो (for कुपितो). Y1A [ऽ]पि धाता (for विधाता). — c) A0-2 नैवास्य; A3 नैतस्य; E5 न न्वस्य; M3 नान्यस्य (for न त्वस्य). F4 °भेदविधि-; J1 °भेदविध- (for °भेदविधौ). B प्रगल्भां; C प्रसिद्धं; D प्रदिग्धां (for प्रसिद्धां). — d) A2 B1 D E1.2t (and Ec generally) F5 I J3 W2.3 Y2 T3 (orig.) वैदग्ध-; C वैगंध्य- (for वैदग्ध्य-). C अपहातुम्; G2 M1.4.5 अपहंतुम् (for °हर्तुम्).

BIS. 544 (201) Bhartṛ. ed. Bohl. 2. 15. Haeb. 43. Galan 18; Śp. 797 (Bh.); SRB. p. 221. 15 (Bh.); SKM. 15. 2; SRK. p. 183. 2 (Bh.); ST. 12. 2; VS. 22; SK. 3. 136; SU. 1149 (Bh.); SKG. f. 16a.

39 a) F2 खल्वाटे; T1A G1-4 M खु(M3 खा)वांटो. C J2 G1 M2.4 संताडितो; E0 °संतापतो; J1.3 Y4-8 T G2-5 संतापिते (for °पितो). — b) J Y4-8 T G2-5 M1.2 गच्छन्; G1 भ्राम्यन् (for वाञ्छन्). C J Y4-8 T G M2 द्रुतगतिः; Y2 द्रुतमसौ (for विधिवशाद्). I छायार्थी समुपेत्य सत्वरमसौ. D F1.3 J S ताल(W1-3 °ड)स्य (for बिल्वस्य). E3 T2 मूले. T2 स्थितः (for गतः). — c) W तत्राप्याशु (for °प्यस्य). J1 पततस्. A3 I तत्रोच्चैर्महता फलेन पतता; T3 तत्रस्थेपि महत्फलं निपतितं; G1 तत्रस्थस्य च तत्फलेन पतता; M3 तत्रस्थस्य तु तत्फलैर्निपतितैर्. T2.3 भिन्नं (for भग्नं). C M1.3.5 समस्तं; X सशब्दः (for सशब्दं). J1 तालस्य भग्नं शिरः. — d) F1-3 दैवरहितस्; J1.3 X Y1.4-8 T G M1.2.4.5 दैवहतकस्; J2 दैवकृतकस् (for भाग्यरहितस्). M3 यत्रायांति हि मंदभाग्यनिवहस्. A0.1 तत्रैव यात्यापदः (com. आपदो याति probably acc. plural); A3 C E3t F1.2.5 H1 (c.v. as in text).3 I W तत्रापदां भाजनं; X2 G2t तत्रैव यंत्यापदः.

BIS. 2048 (802) Bhartṛ. ed. Bohl. 2. 86. Haeb. 44. lith. ed. I. and III. 89. Galan 91. Subhāsh. 308; Śp. 437 (Bh.); SRB. p. 94. 114 (Dibiradevāditya); SBH. 3141 (Diviradevāditya); SRH. 36. 7 (Pañc.); SRK. p. 71. 13 (Bh.); VS. 959 (Devāditya); SHV. f. 65a (Bh.) and 80b; SS. 46. 8; SG. f. 34a; SSD. 4. f. 4b; SMV. 8. 5.

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा किल संचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ४० ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः शमस्य विनयो वित्तस्य पात्रे व्ययः
अक्रोधस् तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ४१ ॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।

---

40 [a]) $X_2$ भवति (for फलति). $W_4$ om.; $X_1$ च शीलं (for न शीलं). — [b]) A $F_{1-4}$ H J न चापि; $W_3$ $Y_3$ च नैव; $Y_8$ $M_5$ न चैव (for [अ]पि नैव). $F_1$ नव-; $T_2$ च न (for न च). C यत्नकृता च सेवा; $F_1$ यौवनकृतापि सेवा. — [c]) $G_1$ $M_{1-3}$ पुण्यानि (for भाग्यानि). $B_1$ पूर्वजनुषा; $Y_2$ पूर्वतपसां. C $E_{3t}$ $J_3$ $W_{1.2}$ $Y_{3-8}$ T G M खलु; D बहु; $J_{1.2}$ [अ]खिल-; $Y_2$ फल- (for किल). $W_1$ सेवितानि (for संचि°). — [d]) $X_1$ पुरणस्य (for पुरुषस्य). $E_2$ यथेह; $J_1$ च दैव-; $Y_7$ यदैव; $M_{4.5}$ यथा हि (for यथैव).

BIS. 3825 (1648) Bhartṛ. ed. Bohl. and lith. ed. I. **2.** 94. Haeb. 45. lith. ed. II. 96. Galan 98. Subhāsh. 108. Vikramacaritra 173, 263; SRB. p. 92. 72 (Aśvaghoṣa); SBH. 3100 (Aśyaghoṣa); SRH. **34.** 50 (var. Vidagdhajana-vallabhā); SRK. p. 76. 6 (ST.); Tantrākhyāyikā II. 115; cf. Garuḍamahāpurāṇa **113.** 52 (paraphrase in Upajāti metre); Prabandhacintāmaṇi **3.** 170; SHV. f. 63b, 79b; SS. **46.** 14; SL. f. 27a; SSD. **4.** f. 4a; SMV. **8.** 24; JSV. **262.** 5, f. 299b (*marg.*).

41 Om. in Jodhpur 1, Mysore 582. — [a]) $G_3$ सुभूषणं (for विभू°). $B_2$ $E_{2t}$ स्वजनता (for सुजनता). $E_3$ $J_1$ सौर्यस्य; X $Y_1$ शूरस्य (for शौर्यस्य). — [b]) $J_{1.3}$ ज्ञानस्योपशमं; $G_1$ M ज्ञानस्योपरमः ($M_3$ °तिः). A H कुलस्य; B C D $F_3$ **S** (except $G_1$ $M_3$) श्रुतस्य; $E_{3c}$ समस्य (for शमस्य). $E_5$ विभवस्य (for वित्तस्य). C पात्रेर्पणं (for पात्रे व्ययः). — [c]) Eot. 1t. 2 तपसां (for तपसः). $W_4$ प्रभवितुं. $J_1$ निर्वाजिता. — [d]) C सर्वेषामिह; $X_2$ सर्वस्यामपि (for सर्वेषामपि). C कारणं परमिदं; X $G_{4t.v.}$ सर्वभूषणमिदं.

BIS. 1487 (581) Bhartṛ. ed. Bohl. **2.** 80. Haeb. 46. lith ed. I and III. 81. Galan 83. Prasaṅgābh. 3. Subhāsh. 180; SRB. p. 84. 20; SBH. 3054; SRH. 180. 11 (Sarasvatīkaṇṭhābharaṇa); SRK. p. 14. 34, and p. 231. 6 (Bh.); Sūktāvali 1; SA. **8.** 48; ST. **1.** 51; SHV. app. I. f. 9b. 43; SM. 1353; SSD. **2.** f. 116b; SSV. 1335; JS. 370.

42 [a]) $F_5$ आंध्यं (for जाड्यं). $A_{0-2}$ शंसति; $A_3$ यच्छति; $W_3$ सिंचत; $T_3$ (orig.) सीदति (for सिञ्चति). $W_3$ सत्यमानो (for वाचि सत्यं). — $E_{3t}$ transp. पापमपाकरोति (in [b]) and दिक्षु तनोति कीर्तिं (in [c]). — $G_{3t}$ चित्तं (for चेतः). $Y_3$ प्रसारयति (for प्रसाद°). $M_3$ करोति (for तनोति). $F_4$ कीर्तिः. — [d]) $J_{1t}$ सत्संगमः (for °तिः).

चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्संगतिः कथय किं न करोति पुंसाम् ॥ ४२ ॥

वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद् भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले
एते येषु वसन्ति निर्मलगुणास् तेभ्यो*ऽपरेभ्यो नमः ॥४३॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे मतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् ।
मान्यान् मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत् सतां चेष्टितम् ॥४४॥

---

BIS. 2376 (955) Bhartṛ. ed. Bohl. **2.** 20. Haeb. 48. lith. ed. I. 22. Galan 23. Saṁskṛtapāṭhop. 62. Subhāsh. 309; SRB. p. 87. 29; SRK. p. 88. 1 (Bh.); SA. **24.** 81; SS. **29.** 5; SK. **2.** 191; PT. **1.** 58; SSD. **2.** f. 114b; SMV. **9.** 60.

43 a) J3 Y2.4–8 T G2.3.5 °संगतौ (for °संगमे). A1.2 J2 (t.v. as in text) बुधजने (for परगुणे). — c) B1 E0.1.5 (and Ec) I चार्हति; J3 Y6 M चक्रिणि (for शूलिनि). J2 भक्तिर् (for शक्तिर्). E3t °पदने (for °दमने). B1 Y4 G3.4 खलेषु; J Y5–8 T G1.2.5 M1.3–5 खलैर् (for खले). — d) J1 Y7 ये ते; X Y1.2 ह्येते (for एते). Y1 यत्र (for येषु). C E5 W1.3 M येष्वेते निवसंति; D ये तेषु वसंति; W2.4 येष्वेतेषु नरेषु (for एते येषु वसन्ति). A0–2 तेभ्यः परेभ्यो नमः; A3 B C D E F1.3–5 H I W X Y1.3.8 M1.2.4.5 तेभ्यो नरेभ्यो नमः; F2 J3 Y2.4–7 T G तेभ्यो महद्भ्यो नमः; J1.2 T1c.v. तैरेव भूर्भूषिता; M2 तेष्वेव लोकस्थितिः.

BIS. 6031 (2773) Bhartṛ. ed. Bohl. **2.** 52. Haeb. 49. lith. ed. I and III. 61, II. 62. Galan 65. Saptaratna 1 (Haeb. p. 51). Kāvyakal. and Kāvyas. Prasaṅgābh. 8. Subhāsh. 159, 309; SRB. p. 53. 259; SBH. 2944; SRK. p. 18. 71 (Bh.); Mahānāṭaka **3.** 37; VS. 345 (Bh.); SHV. app. I f. 9b. 42; SS. **6.** 27; SK. **2.** 63; PT. **1.** 59; SSD. **2.** f. 92b; SSV. 31; JS. 12.

44 a) C भिंधि (for छिन्धि). E3t जभ (by metathesis); W2(orig.).4 मज; W2m.v. त्यज (for भज). B F1.4 त्यज (for जहि). W2 पदं (for मदं). W4 पापैर् (for पापे). **N** (except A C I) **S** (except W2–4 M4.5) रतिं (Y4 कृतिं) (for मतिं). — b) W2.3 स्वल्पं (for सत्यं). X साधुपदवी; G1 M2.3 साधुचरितं. F1 सर्वस्व (for सेवस्व). B2 C F5 Y6.8 T G1.2.5 M विद्वज्जनं. — c) T3 वाक्यान्; G2.3 M4.5 मान्यं (for मान्यान्). C [अ]नुनयन्; H1c.v. I G4 [अ]पनय; Y7 व्यपनय (for [अ]नुनय). W1.2.4 Y3–8 T G1–4 M1.3 प्रख्यापय; W3 प्रक्षापय; Y1 (A and B) प्रच्छादयन्. Y3–7 T1.3 G2–4 M1 प्रश्रयं; Y3 स्वं शुभं (for स्वान्गुणान्). — d) F1 कीर्तीः; W4 X1 कीर्तिः. F3.4t.v. J1.2 W M1.2 लक्षणं; Y1 चेष्टितः; M4.5 भूषणं (for चेष्टितम्).

BIS. 2597 (1051) Bhartṛ. ed. Bohl. **2.** 70. Haeb. 51. lith. ed. I and III. 76, II and Galan 78; SRB. p. 53. 273; SRK. p. 37. 1 (Śp.); SS. **26.** 9; SU. 1441; JSV. **13.** 23.

किं कन्दाः कन्दरेभ्यः प्रलयमुपगताः पादपाः किं विशीर्णाः
किं वा शोषं गतास्ते गिरिकुहरगता निर्झरा वारिपूर्णाः ।
किं तद् वैराग्यमूलं सुचरितनिशितं ज्ञानखड्गं प्रनष्टं
येन द्वारे नृपाणां धनमदमलिनाः सङ्गमायान्ति धीराः ॥ ४५१ ॥

किं कर्पूरैः किमु मलयजैरम्बुभिः किं हिमांशोः
किं ताम्बूलैः किमथ वसनैः किं नु भोज्यैर्दुरापैः ।
चिद्रूपाणां सरसवचसां सज्जनानां प्रियाणां
लीलागोष्ठी यदि सवयसां लभ्यते पुण्यलभ्या ॥ ४५२ ॥

किंचिदन्तर्हिते भानौ पद्मिनी वीतरागिणी ।
आलिङ्ग्य मधुपं शेते प्रियः को नाम योषिताम् ॥ ४५३ ॥

किं तेन हेमगिरिणा रजताद्रिणा वा यत्राश्रिताश्च तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण कङ्कोलनिम्बकटुजान्यपि चन्दनानि ॥ ४५४ ॥

किं बाले तव सुव्रणोऽयमधरो गात्रं च किं ते श्लथं
रात्रावद्य विदग्धभोगपटुना दष्टा भुजंगेन वै ।
यद्येवं सहसा मृतो[ता]सि न कथं कालेन दष्टा सती
जप्तं तत्समयेऽप्यनन्यमनसा हाहेति मन्त्रो मया ॥ ४५५ ॥

किं यामि विक्रमपुरं किमु कामरूपं किं यामि दक्षिणपथं मथुरां व्रजामि ।
आराधयामि शिवनाथमनाथनाथं विम्बायमानहृदयः किमहं करोमि ॥ ४५६ ॥

किं शाकानि न सन्ति भूधरसरित्कुञ्जेषु मूलानि वा
किं वा जीवनमेतदेव विहितं यद् वा वनं न क्वचित् ।
येन श्रीमदमोहमूढमनसां स्थित्वाग्रतो भूभृतां
श्वासोत्कम्पकदर्थिताक्षरपदं देहीति वागुच्यते ॥ ४५७ ॥

---

451 F2 V60. — a) किं दाराः कन्दराभ्यः । — b) Omitted. — c) °ग्ययुक्तं (for °ग्यमूलं). — d) धनमलिनमनां सङ्गतिं यान्ति धीराः (sic); Jodhpur1 and Nag 1087 V59. BVB5 V62. — c) ते (for तद्)...विनष्टं. Also Nag421 V64; Meh V159. — BIS. 1725 (665) as variant for किं कन्दाः कन्दरेभ्यः from Subhāsh. 66.

452 Pun2101 N extra 3 (on marg.); NS1 N117 (119). — SS. 57. 9.

453 G1 Ś III-10. — b) पद्मिनीव विरा°. — c) मधुपः; M1.2 Ś III-11. Adyar XXIII-B-10 Ś III-11; Pun2885 Ś 60 (54). HU2133 and BORI Limaye273 Ś 56; Pun1538 extra 2; Śṛṅ309 Ś 26. — b) गूढरागिणी. — c) मधुरं.

454 W N49. — d) v.l. कटुकान्यपि, कटुजा अपि. — BIS. 1754 (681) Bhartṛ. ed. Bohl. extra 8. lith. ed. I and III. 2. 78. Galan. 80. Vetālabh. Nītipr. 12. in Haeb. p. 528; Śp. 1067 (*cdab*); SRB. p. 215. 7; SBH. 1006; SDK. 4.34. 1 (p. 249); SRK. p. 19. 77, p. 196. 4 (Śp.); VS. 294; SS. 29. 6; SK. 2. 186, 6. 178; SU. 1323; PT. 10. 12; SSD. 2. f. 54; SMV. 9. 25; SKG. f. 15b.

455 Bikaner 3275 Ś 85. 456 HU271 V3; Bik3277 N I-4.

457 C and Rāj4 V73. — a) शाका विरमन्ति. — b) चात्रैव वान्यस्क्वचित्. — c) भूभुजां (for भूभृतां). — d) °ताक्षरपदा. F1 V70; F4 V76 (75); IO 1151b V72; Nag421 V66; RASB11030 V74. — SBH. 3472.

कियती पञ्चसहस्री कियती लक्षापि कोटिरपि कियती ।
औदार्योन्नतमनसां रत्नवती वसुमती कियती ॥ ४५८ ॥

कीर्तिस् ते धनिका धनं मधुरिमा तस्याधमर्णा सुधा
शीतांशुप्रतिभूस् तदर्थनमियं कर्तुं दिवं धावति ।
सा लीना तव वाचि भोजनृपते चन्द्रो निरङ्किध्वनिः
शङ्कार्तोकभृदंशुकावृततनुर्नक्तं परिभ्रामति ॥ ४५९ ॥

कुचशैलसंनिधाने त्रिवलिनदीतीरे तन्वाः कुचचत्वरे चपले ।
दृश्यं छलयति पिशाचः पुरुषाणां हि मनागपि शवलितम् ॥ ४६० ॥

कृत्वोंकारप्रदीपं मृगय गृहपतिं सूक्ष्मनाड्यन्तरस्थं
संयम्य द्वारवाहं पवनपटुतरं नायकं चेन्द्रियाणाम् ।
वाग्जालं कस्य हेतोः प्रलपसि बहुधा दृश्यते नैव किंचिद्
देहस्थं पश्य नाथं भ्रमसि किमपरे शास्त्रजाले विशाले ॥ ४६१ ॥

कृशोऽपि धन्यः सुजनः सुबुद्धिमान् परोपकारार्थमिहार्थसंपदः ।
महापथावस्थितपादपः शुभः कृशोऽपि काष्ठाय फलान्वितः किमु ॥ ४६२ ॥

कृशोऽपि सिंहो न समो गजेन्द्रैः सत्त्वं प्रधानं न च मांसराशिः ।
अनेकवृन्दानि वने गजानां सिंहस्य नादेन मदं त्यजन्ति ॥ ४६३ ॥

कृष्णः करोतु कल्याणं कंसकुञ्जरकेसरी ।
कालिन्दीकूलकल्लोलकोलाहलकुतूहली ॥ ४६४ ॥

केषांचिन् निजवेश्मनि स्थितवतामालस्यवश्यात्मनां
दृश्यन्ते प[फ]लिता लता इव चिरं संपन्नशाखाः श्रियः ।
अब्धिं लङ्घयतां खनीः खनयतां क्षोणीतलं क्षुन्दताम्
अन्येषां व्यवसायसाहसधियां तन् नास्ति यत् पच्यते ॥ ४६५ ॥

कैवर्तकर्कशरग्रहविच्युतोऽसौ जाले पुनर्निपतितः शफरो वराकः ।
जालात् पुनर्विगलितोऽपि धृतो बकेन दैवाहतो व्रजति यत्र विपत्पुरस्तात् ॥४६६

---

458 BORI 326 Ś80; VSP Ś 101. — SRB. p. 70. 23; SHV. f. 69a. 738; SS. 17. 48; SSV. 550. 459 J3 extra 4.

460 Bik 3280 Ś102; Bik 3279 S 98(99); Pun 1538 N100.

461 ISM Gore 144. V191; GVS 2387 V69. — c) नटयसि (for प्रलपसि). BVB5 V106 (extra); variant of 441. 462 Śrṅ309 N72.

463 A N46. — BIS. 7504. Subhāsh. 109; SS. 54. 1.

464 Wai2 N1. — JSV. 102. 1.

465 IO3318 (with Hindi trans. by Indrajit) N64. — SRB. p. 95. 126.

466 Bar 5199 N31. — BIS. 1918 (740) Pañc. ed. Koseg. II. 87. Subhāsh 68; SRB. p. 92. 75; SRK. p. 219. 30 (Kalpataru); SG. f. 34a; SSD. 2. f. 52b.

को न याति वशं लोके मुखपिण्डेन पूरितः ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ ४६७ ॥

को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः संगमः
का हानिः समये च्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ ४६८ ॥

क्रीडां करिष्यति कियच्चिरमेकहंसः स्निग्धोल्लसत्कलरवोऽपि शरीरवाचाम् ।
कालैरघट्टघटिकावलिपीयमानम् आयुर्जलं पिबति शोषमुपैति यत्र ॥ ४६९ ॥

क्वचिद्वीणानादः क्वचिदपि च हाहेति रुदितं
क्वचिद् विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः ।
क्वचिद् रम्या रामा क्वचिदपि जराजर्जरतनुर्
न जाने संसारः किममृतमयः किं विषमयः ॥ ४७० ॥

क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ।
दुष्पूरोदरपूरणाय पिबति स्रोतःपतिं वाडवो
जीमूतस् तु निदाघसंभूतजगत्संतापविच्छित्तये ॥ ४७१ ॥

---

467 — BIS. 1930 (748) Bhartṛ. ed. Bohl. extra 20. Haeb. **2.** 105; SRB. p. 156. 156; SRK. p. 232. 20 (Sphuṭaśloka); ST. **13.** 2. SK. 147a; SL. f. 32b.

468 W N103. — BIS. 1943 (755) Bhartṛ. ed. Bohl. extra 10. lith. ed. I. **2.** 101; III. 102. Galan 105. Nītisaṃk. 27. Kavitāmṛtak. 53. Prasaṅgābh. 11b; SRB. p. 180. 1405; SRK. p. 239. 84 (Bh.); SL. f. 30a; SN. 841; SSD. **2.** f. 157a; SMV. **11.** 2.

469 D V142; BORI 328 V160 (51). — a) करिष्यसि…एष (for एक-). — c) कालारघट्ट. — d) झटिति (for पिबति); Bik 3279 V154 (50).

470 A V66; F3 V69 (*acbd*). — a) वीणावादः. — c) नारी (for रामा). °दपि च जराजीर्णवपुषः; F5 V102. — a) -वाद्यं (for -नादः). — b) °दपि च सुरा°. — c) क्वचिद्रामा रम्याः…गलत्कुष्ठवपुषो (for जरा°); X V58 (*cabd*). — a) वाणी (for -नादः). — b) हुतासानमतुलं (for सुरा°). — b) गलत्कुष्ठरुधिरा (for जरा°); BORI 326 V98 (97) (*acbd*). — a) वाद्यं (for नादः). — c) क्वचिद्रामा रम्या… -वपुः (for -तनुः); BORI 328 V114 (112); BORI 329 V56; BU V107 (105); Wai2 V92; Jodh1 V77; Jod3 V37 (*bcad*); Pun2101 V55; Pun697 V66; GVS 2387 V121; HU 2144 V97 (93); HU 2145 V106 (99); Meh V114; PU496 V103 (102); Bik 3279 V115 (12); Bik 3280 V111 (12). — BIS. 1989 (3991) Bhartṛ. in Schiefner and Weber. p. 25. Subhāsh. 28. 313; SRB. p. 89. 5 (*bacd*); SBH. 2941. — a) नृत्तं गीतं (for वीणानादः); SRK. p. 99. 5 (*bacd* Bh.); RKB. f. 39a (Bh. var.); SMV. **8.** 13 (*bcad*).

471 Nag 421 Tau 4911 and 4934, N12. N15 in Telang's Ms. D. — BIS. 2032 (794) Vikramaca. 5. Śp. 773 (Meghānyokti 9); SRB. p. 52. 257 (*also* p. 230. 37); SBH. 285; SRK. p. 12. 21 (ST.) SA. **27.** 15; Prabandhacintāmaṇi (Siṅghi ed.) 128; ST. **1.** 33; SS. **24.** 13; SK **2.** 74, **6.** 34; SSD. **2.** f. 123a; JSV. **182.** 8; SKG. f. 15b.

क्षोणीशाश्रयिणां परोपकरणाभावादवाप्तश्रियां
कार्पण्यात् सुधियामनध्ययनतो यूनां प्रवासाश्रयात् ।
ज्ञातॄणां हरिपादभक्तिविरहादायुर्वृथा गच्छती-
त्येवं शासनमासनं प्रतिदिनं नादो भवत्युच्चकैः ॥ ४७२ ॥
क्षौमं वासो वनभुवि गुहातीरगङ्गा निपानं
भोज्यं भिक्षा तरुतलगता वीथिका दीर्घशय्या ।
भक्तिः कान्ता हरचरणयोः कीर्तनं क्रीडितानि
ध्यानं शंभोः सुरतिमनिशं त्वत्प्रसादान् ममास्तु ॥ ४७३ ॥
खद्योतो द्योतते तावद् यावन् नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥ ४७४ ॥
गङ्गातरङ्गनिर्धूतशीतले वा शिलातले ।
सुप्यते सुरतश्रान्तकान्तकान्ताकुचस्थले ॥ ४७५ ॥
गङ्गा ता[पा?]पं शशी तापं दैन्यं कल्पतरुस् तथा ।
पापं तापं च दैन्यं च हन्ति सङ्गो महात्मनाम् ॥ ४७६ ॥
गतं कर्णाभ्यर्णं प्रसरति तथाप्यक्षियुगलं
कुचौ कुम्भारम्भौ तदपि चुबुकोत्तम्भनरुची ।
नितम्बप्राग्भारो गुरुरपि गुरुत्वं मृगयते
कथंचिन् नोऽजैषीत् तरुणिमनि मन्ये मृगदृशः ॥ ४७७ ॥
गतं तत् तारुण्यं तरुणिहृदयाह्लादजनकं
विशीर्णा दन्तालिर्गतिरपि शनैर्यष्टिशरणा ।
शिरः शुक्लं चक्षुर्घनपटलसुच्छादितमहो
मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ ४७८ ॥

---

472 Ana (Apte Fragment) V152. — SRB. p. 180. 1049. — [d]) -त्येवं कांस्यसमुद्भवः...वदत्युच्चकैः; SRK. p. 238. 76 (ST.); SHV. App. I f. 2b). 27.

473 D V144. — [a]) नदीतीरगं वारि पानं (for गुहातीर°). — [d]) सुरतमरवामनिषं (corrupt); F3 V110; BORI328 V164 (55). — [c]) करचरणयोः...क्रीडितानां; Bik 3280 V158 (54).

474 Pun2885 f. 24b (top marg.). — Śp. 738; SRB. p. 209. 2; SRK. p. 168. 2 (Śp.); ST. 23. 1; SU. 1099; PT. 10. 1; PMT. 184; SSD. 2. f. 3b.

475 Wai2 Ś88; NS1 V2 (*cdab*) — [c]राज्यते सुरतक्रान्त-; ISM Kaḷamkar 846. — [a]) गङ्गानिर्धौतसलिल-; Ś 85 (*cdab*) in R. P. Dewhurst J. U. P. Hist. Soc. I.

476 ASP1461 extra 1.

477 BOKI326 Ś6. — SKM. 52. 7 (Rudra); Rudraṭa's Śṛṅgāratilaka (KM. 3, p. 117); SK. 5. 260 SG. f. 66b.

478 F4 Ś80. — [d]) भोगेभ्यः (for विषयेभ्यः); Āna 624 V99. — [a]) हृदयानन्द°. — [b]) निजगतिरभूद् (for गतिरपि शनैर्). — [c]) जडीभूता दृष्टिः श्रुतिविरहितं कर्णयुगलं. — SRB. p. 76. 41.

गतं तत् तारुण्यं युवतिहृदयाह्लादजनकं
व्यतीतः सौन्दर्यः समदकरिकुम्भौघदलनः ।
जरा निर्लज्जेयं शिरसि पदमुच्चैः कृतवती
परब्रह्मेदानीं जननमरणोच्छेदजनकम् ॥ ४७९ ॥

गन्धाढ्यां नवमल्लिकां मधुकरस् त्यक्त्वा गतो यूथिकां
तां त्यक्त्वाशु गतः स चम्पकवनं तस्मात्सरोजं गतः ।
बद्धस् तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः
संतोषेण विना पराभवपदं पश्यन्ति सर्वे जनाः ॥ ४८० ॥

गर्भस्थं जातमात्रं शयनतलगतं मातुरुत्सङ्गसंस्थं
बालं वृद्धं युवानं परिणतवयसं विश्वमान्यं बलाढ्यम् ।
वृक्षाग्रे शैलशृङ्गे नभसि पथि जले कोटरे पञ्जरे वा
पाताले वा प्रविष्टं हरति च सततं दुर्विबाधः कृतान्तः ॥ ४८१ ॥

गर्वं नोद्वहते न निन्दति परान् नो भाषते निष्ठुरं
प्रोक्तं केनचिदप्रियं च सहते क्रोधं न चालम्बते ।
श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकवद्
दोषांश् छादयते स्वयं न कुरुते ह्येतत् सतां लक्षणम् ॥ ४८२ ॥

गात्रं पात्रं प्रथमवयसि प्रेयसीनां स्तनानाम्
आश्लेषाणां तदिदमधुना वन्यमेतत् कृतार्थम् ।
येनासीने त्वयि गिरितटे श्लिष्टनासाग्रदृष्टौ
हर्षस्पर्शं जहति हरिणश्रेणयः कायकण्डूः ॥ ४८३ ॥

गात्रैर्गिरा च विकलश् चटुमीश्वराणां कुर्वन्नयं प्रहसनस्य नटः कृतोऽसि ।
न त्वां पुनः पलितकर्णकभाजमेनं नाट्येन केन नटयिष्यति दीर्घमायुः ॥ ४८४ ॥

---

479 GVS2387 V59; BVB5 V103 (extra). — [b]) कुंभैकदलनः. — SK. 7. 37.

480 ISM Kalamkar 692 V71. — [b]) त्यक्त्वा गतभृङ्ग चम्प° (corrupt). — BIS. 2082 (821) Bhramarāṣṭaka 2. in Haeb. 240. Subhāsh. 153; SRB. p. 75. 18; SBH. 753; SRK. p. 186. 14 (Kāvysaṁgraha).

481 BORI 328 V123 (119). — [c]) वृक्षाग्रे...पथगते (for पथिगते). — BIS. 2094. Subhāsh. 146; SA. 38. 24; SS. 23. 10.

482 NS3 N45. — [a]) नो दहते; Āna624 N45. — [b]) क्रोधेन चालम्बते. — BIS. 2095. Subhāsh. 195; SN. 709; JSV. 182. 2.

483 D V137; F1.2 V111. — [b]) D F1 वन्यमन्यत्कृतार्थम् । — [c]) F1 °प्रदृष्टे; BORI328 V149 (141). — [d]) कामकण्डूः; Pun697 V23; SVP159 V extra 17. — [b]) धन्यमन्ये कृतार्थम् । — [d]) हर्षस्पर्शाज्जहति ।; Meh V153; HU271 and VSP V135; Bik3279 V145 (41); Bik3281 V133 (134); Bik3278 V134.

484 H V7; NS3 V6. — SDK. 5. 42. 2 (p. 305, Murāri).

गान्धर्वं गन्धसंयुक्तं ताम्बूलं भारती कथा।
इष्टा भार्या प्रियं मित्रमपूर्वाणि दिने दिने ॥ ४८५ ॥

गृहपदमिदं धर्मारण्यं किमत्र विचित्रता
भवति मनसो यत्रासङ्गः स एव निबन्धनम्।
चरमवयसि त्यक्त्वा गेहं वने वसता मया-
प्यधिगत इवापत्यस्नेहो लतासु मृगीषु च ॥ ४८६ ॥

ग्रामे ग्रामे कुटी शून्या भैक्ष्यमन्नं गृहे गृहे।
मार्गे मार्गे जरद्वस्त्रं वृथा दैन्यं नृपे नृपे ॥ ४८७ ॥

चक्रं सेव्यं नृपः सेव्यो न सेव्यः केवलो नृपः।
चक्रस्यापि विरोधेन वासः प्रेतत्वमागतः ॥ ४८८ ॥

चक्षुः संवृणु वक्त्र वीक्ष करणं वक्षः समाच्छाद्यतां
हृद्य स्फूर्जमनेकभावचतुरं भृङ्गाररम्यं वचः।
मन्ये ते नवनीतपिण्डसदृशा मूर्त्या भजन्ति स्त्रियं
मुग्धे किं परिवेदितेन वपुषा पाषाणकल्पा वयम् ॥ ४८९ ॥

चत्वारो धनदायादा धर्माग्निनृपतस्कराः।
ज्येष्ठस्यापि विरोधेन त्रयं कुप्यंतनतिस ॥ ४९० ॥

[चन्द्रः शो]भति निर्मले च गगने ताराविचित्राम्बरे
हंसः शोभति पद्मपत्रसलिले वैडूर्यवर्णोदके।
हारः शोभति कामिनीकुचतटे स्त्री चञ्चला यौवने
राजा शोभति मन्त्रिभिः परिवृते सिंहासने सुस्थितः ॥ ४९१ ॥

चपलतरतरङ्गैर्दूरमुत्सारितोऽपि
प्रथयति तव कीर्तिं दक्षिणावर्तशङ्खः।
परिकलय पयोधे विष्णुपादार्घयोग्यस्
तव निकटनिषण्णैः क्षुल्लकैः श्लाघ्यता का ॥ ४९२ ॥

---

485 C Ś91; [C2 Ś96]; ISM Kaḷamkar 195 Ś101 (102); Nag421 Ś100 — SRB. p. 159. 266.

486 D V146. — [a]) किमत्र दिवी चिसतां (corrupt); BORI328 V166 (57). — [b]) यत्रासंतः; Bik3279 V160 (56). 487 Ujj6414 V30.

488 HU2145 N9 (4). — SRB. p. 146. 161 (*cd* var.); Śp. 1378 (*c* var.).

489 Pun 2127 and Bik 1027 V74; HU271 V75.

490 HU2145 N78 (1) corrupt. — SRB. p. 156. 164 ([cd] तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति बान्धवाः); SRK. p. 237. 67 (Sphuṭaśloka).

491 HU2145 N123 (105).

492 X2 extra 4. — Śp. 1092; SRB. p. 216. 21.

चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ।
ये रमन्ते नरास् तत्र कृमितुल्याः कथं न ते ॥ ४९३ ॥

चलन्ति मेरुप्रमुखा महाचलाश् चलन्ति ताराग्रहभास्करादयः ।
कल्पान्तकाले चलते महोदधिर् न साधुवाक्यं चलते कदाचित् ॥ ४९४ ॥

चला लक्ष्मीश् चलाः प्राणाश् चलं जीवितयौवनम् ।
चलाचले च संसारे धर्म एको हि निश्चलः ॥ ४९५ ॥

चिन्तायाश् च चितायाश् च बिन्दुमात्रं विशेषतः ।
चिता दहति निर्जीवं चिन्ता जीवन्तमप्यहो ॥ ४९६ ॥

चीराणि किं पथि न सन्ति दिशन्ति भिक्षां
  नैवाङ्घ्रिपाः फलभृतः सरितोऽप्यशुष्यन् ।
रुद्धा गुहापि यमिनो धनिनोपपन्नान्
  कस्माद् भजन्ति कवयो धनदुर्मदान्धान् ॥ ४९७ ॥

चेतः प्रेतसमं [समं-]गलशतान्यासीदनस् तृप्यति
  प्रायः कायकुटी घटीकु[च]लकुटी रोगैर्भवेज् जर्जरः ।
गृध्री सिद्धिहरी दरीव तमसा चक्षुः परं मोहय-
  त्यायुर्वायुचलं कलङ्कयति हा जीवं मुहुर्जन्मभिः ॥ ४९८ ॥

चेतोहरा युवतयः सुहृदोऽनुकूलाः
  सद्बान्धवाः प्रणयगर्भगिरश् च भृत्याः ।
वल्गन्ति दन्तिनिवहाश् चपलास् तुरंगाः
  संमीलने नयनयोर्न हि किंचिदस्ति ॥ ४९९ ॥

चेष्टा भवति पुंनार्योर्या रत्युत्पत्तिरक्तयोः ।
संभोगो विप्रलम्भश् च शृङ्गारो द्विविधो मतः ॥ ५०० ॥

493 — BIS. 2259 (903). Bhartr. lith. ed. 1. 3. 17; SRB. p. 371. 123; SRK. p. 250. 83 (BIS.); SK. 6. 500.

494 Nag 299 N116; Meh V130; Bik 3287 N extra 2.

495 A V108; E3 V extra 9; E4 V118 (117); BOR1329 V102; Pun 627 V125; Pun 2101 V102. — BIS. 2267–9 (906). Subhāsh. 203. 319. Cāṇakyanītidarpaṇa 5. 20 (19). Vikramāca 270; SS. 23. 42.

496 Ady XXIX-E-2. Ś IV–20.

497 G4 V20; Meh V157; ISM Kalamkar 195 V87 (90). — [b]) परभृतः. — [c]) Corrupt). — BIS. 2301 (4053); Bhāgavatap. 2. 2. 5; SRB. p. 75. 15; SSD. 2. f. 139a. 498 GVS2387 V60.

499 J3 extra 3 (repeated); SVP159 V extra 19. — Śp. 4130; SRB. p. 373. 174 (Vikramāditya); SBH. 3318 (Vikramāditya); SRK. p. 144. 1 (Sphuṭaśloka); SS. 23. 5; SU. 1022 (Bh.); BPB. 200; SSV. 243; SMV. 8. 14, 30. 7.

500 Pun 2101 f. 32b (extra).

जवो हि सप्तेः परमं विभूषणं त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य विद्यैव मुनेस् तथा क्षमा सर्वस्य शीलं हि परं विभूषणम् ॥५०१॥
जातस् त्वं भुवनाधिपो यदि ततः किं सिद्धमेतावता
प्राप्तो वा यदि निःस्वतां विधिवशात् तेनापि किं ते गतम् ।
तस्मात् तोषविषादबन्धनमिदं मत्वेति संचिन्त्यतां
ज्योतिर्यत्र लयं गते त्रिभुवनेऽप्यात्मा समालोक्यते ॥ ५०२ ॥
जिह्वा तृप्यति चुम्बनादधरजात् त्वग् देहसंस्पर्शमान्
नासा तृप्यति सौरभाधिकगुणा ताम्बूलनिःश्वासनात् ।
[चक्षुस् तृप्यति] रूपदर्शनरतात् कर्णौ च शब्दग्रहात्
स्त्री सर्वेन्द्रियवर्गतृप्तिजननी स्वानिः(?) सुखानां ततः ॥ ५०३ ॥
जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तरुणायते ॥ ५०४ ॥
ज्ञानात् सर्वपदार्थानां मद्वाक्यं(?) समुदेत्यलम् ।
ततोऽङ्गवासनानाशाद् वियोगः प्राणचेतसोः ॥ ५०५ ॥
तत् पाण्डित्यं न पतति पुनर्येन संसारचक्रे
सा सत्प्रीतिर्न चलति पुनर्याशुभे वा शुभे वा ।
शुत्रांति(?) संभोगे रतिषु विषये येन वाच्याः परेषां
तत् कर्तव्यं विपुलमतिना यन् न भूयो न भूयात् ॥ ५०६ ॥
तन्वीकटाक्षशरसंधितसंहतानां
तेषां कि[मौप]धवरं [ब्रूह्] वैद्यराज ।
तस्याधरोष्ठरसपानसदैवपेयं
पि[ण्डी]पयोधरमिदं भुजपाशबन्धः ॥ ५०७ ॥
तपन्तु तापैः प्रपतन्तु पर्वतादटन्तु तीर्थानि पठन्तु चागमान् ।
यजन्तु यागैः प्रवदन्तु सांख्यैर्हरिं विना नैव मृतिं तरन्ति ॥ ५०८ ॥

501 C N46; Bar 5199 N49. — [d]) शीलं हि सर्वस्य नरस्य भूषणम् ।; Tan 4911 and 4930, N44; Nag 421 and 1087 N45. (cf. वाचो हि सत्यं etc.). — BIS. 2373 (953). Vānarāṣṭaka 8, in Haeb. 245. Kāvyakal.; Sp. 1556 (Pāṇḍavanakula); SRB. p. 174. 897 (Nakula). — [d]) पराक्रमः शस्त्रबलोपजीविनां; SSD. 2. f. 150a.

502 D V147; Bik 3279 V161 (57); BORI328 V167 (58). — [a]) भवना° — [c]) यस्मात्तोष°.

503 E2 Ś107 (109) om. c (restored from BORI331, Ś110 (112, corrupt).

504 G4 V21. — BIS. 2428 (978). MBH. 13. 367-8 Hariv. 1644. Pañc. ed. Koseg. V. 15. ed. Bomb. 83 Kavitāmṛtak. 65; SRH. 175. 2 (p. 224, Bh.); SSD. 4. f. 15b.

505 ISM Gore144 V181.

506 BORI328 V81 (80). — SDK. 5. 55. 4 (p. 314, var.).

507 Bik 3275 Ś81. — cf. SBH. 2225.

508 NS1 V100.

तया कवितया किं वा किं वा वनितया तया ।
पदविन्यासमात्रेण मनो नापहृतं यया ॥ ५०९ ॥

तरुणि संचर संवर लोचने त्रिनुलेवे सुकुमारपारिग्रहः ।
मम मनोभवनपिडितं न हि शलातामुच्यते मृतमारुणम् ॥ ५१० ॥

तस्यातिरेजे नवनीरजाक्ष्याः समुल्लसन्ती नवरोमराजी ।
मुखेन्दुभीतस्तनचक्रवाकचञ्चु[क्ष]ता शैवलवल्लरीव ॥ ५११ ॥

तानीन्द्रियाणि सकलानि तदेव कर्म
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः स एव
त्वन्यः क्षणेन भवतीति विचित्रमेतत् ॥ ५१२ ॥

तावत् सत्यगुणालयः पटुमतिः साधुः सतां वल्लभः
शूरः सच्चरितः कलङ्करहितः कान्तः कुलीनः कविः ।
दक्षो धर्मरतः सदा स कुशलो विद्वत्सभामण्डनो
यावन् निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ ५१३ ॥

तावत् स्नानसुरार्चनादिनियमस्वाध्यायदानव्रत-
स्तोत्रादीनि पुरा पठन्ति पुरुषा यावन् न लब्धं पदम् ।
दृष्ट्वा सर्वगते द्वितीयरहिते निर्नामदेवे वरे
किं कार्यं विधिना जपेन तपसा मन्त्रेण तन्त्रेण वा ॥ ५१४ ॥

तीर्णं जीर्णं कुटीरं वृकनकुलकुलैराकुलं धान्यशून्यं
कन्थावस्त्रं कदन्नं क्षितितलशयनं हंडिकाखंडनैका ।
काणी काली कुरूपा कटुरटनपरा गेहिनी स्नेहहीना
तिष्ठत्येका विभूतिस् तदपि न गृहिणो गेहवासं त्यजन्ति ॥ ५१५ ॥

---

509 X2 extra 3.

510 Wai2 Ś92 (corrupt). Possibly तरुणि संचर संवर लोचने त्रिभुवने सुकुमारपरिग्रहः... 511 Gondal 4-130-आ Ś94; VSP Ś95.

512 W N40. — BIS. 2533 (1019). Bhartr. ed. Bohl. extra 5. lith. ed. I. 2. 39. Galan 43. Pañc. ed. Bomb. V. 26. Hit. ed. Schl. I. 121. Johns. 136. Vikramaca. 226; SRB. p. 65. 16; SKM. 125. 6 (p. 437, Kṣemendra); SRK. p. 45. 21 (Rasikajīvana); Bhojaprabandha 4; Tantrākhyāyikā II. 61, Edgerton. II. 35; SHV. f. 67a. 700 (Kṣemendra), f. 82a. 94; SS. 39. 29; BPB. 7; SSD. 2. f. 140b; SKG. f. 16a.

513 NS1 V14. — BIS. 2542. Subhāsh. 70; SRB. p. 74. 41; SRK. p. 59. 3 (Sphuṭaśloka). 514 F4 V84 (83). 515 HU2145 V21 (20).

तृषार्तैः सारङ्गैः प्रतिजलधरं भूरि विरुतं
घनैर्मुक्ता धाराः सपदि पयसस् तान्प्रति मुहुः ।
खगानां के मेघाः क इह विहगा वा जलमुचाम्
अयाच्यो नार्तानामनुपहरणीयो न महताम् ॥ ५१६ ॥
तोयैरल्पैरपि करुणया भीमभानौ निदाघे
मालाकार व्यरचि भवता या तरोरस्य पुष्टिः ।
सा किं शक्या जनयितुमिह प्रावृषेण्येन वारां
धारासारानपि विकिरता विश्वतो वारिदेन ॥ ५१७ ॥
त्यक्त्वा सङ्गमपारपर्वतगुहागर्भे रहः स्थीयतां
रे रे चित्त कुटुम्बपालनविधौ को वाधिकारस्तव ।
यस्यैते पुरतः प्रसारितदृशः प्राणप्रियाः पश्यतो
नीयन्ते यमकिंकरैः करतलादाच्छिद्य पुत्रादयः ॥ ५१८ ॥
त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताः ॥ ५१९ ॥
त्रैलोक्यं मधुसूदनस्य जठरे सोऽप्येकदेशस्थितः
सोऽप्यर्धं हरकङ्कणः स च हरः कैलासकोणे स्थितः ।
कैलासोऽपि न लक्ष्यते क्षितितले सा यत्र न मृद्बिन्दुवद्
दंष्ट्राग्रे विलसत्यसौ विजयते लीलावराहो हरिः ॥ ५२० ॥
त्वमेव चातकाधारोऽसीति केषां न गोचरः ।
किमम्भोदवरास्माकं कार्पण्योक्तिः प्रतीक्ष्यते ॥ ५२१ ॥
ददति तावदमी विषयाः सुखं स्फुरति यावदियं हृदि मूढता ।
मनसि तत्त्वविदस् तु विवेचके क्व विषयाः क्व सुखं क्व परिग्रहः ॥ ५२२ ॥

---

516 — Śp. 1205; SRB. p. 52. 244; SDK. 4. 63. 1 (p. 270, Bh.); SHV. App. I f. 1a. 6; VS. 77 (Bh.); SK. f. 147a; SSD. 2. f. 26a.

517 X2 extra 5. — SRB. p. 247. 47; SK. 3. 61.

518 Meh V149. — SKM. 131. 41. (Indrakavi).

519 NS1 Ś2; Nag 299 N121; Meh V140; Bik 3287 N extra 3. — BIS. 2621 (1063). Vṛddhacāṇ. 14. 20. Hit. ed. Schl. ad. 85. 11. Johns. III. 24. Galan. Varr. 4; Śp. 734; SA. 27. 78. — d) अनित्यतां; Garuḍamahāpurāṇa. 108. 26; SHV. f. 49a. 358. — d) भज नित्य°.

520 Nag 421 N99; GVS 734 N103. — d) लीलावतारो.

521 W N50. — d) W1 प्रतीक्षसे; W2 °क्ष्यसे; W3 °क्षितः।; NS3 N114. — BIS. 2661 (1081). Bhartṛ. ed. Bohl. extra 6. lith. ed. I and III. 2. 49. II. 50. Galan 53; Śp. 782; SRB. p. 211. 5; SRK. p. 172. 4; SG. f. 27b.

522 — BIS. 2705 (1105). Śāntiś. 2. 5. Haeb. p. 416. Śatakāv. 26; SRB. p. 363. 37; SDK. 5. 55. 1 (p. 313); SRK. p. 38. 12 (Sphuṭaśloka); RKB. f. 39a. (Bh.); SSV. 1428.

दद्यात् साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः क्रमेण ।
तस्माद् देयो विपुलमतिभिर्नावकाशोऽधमानां
जारोऽपि स्याद् गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥ ५२३ ॥

दन्तैरुच्चलितं धिया तरलितं पाण्यंघ्रिणा कम्पितं
[दृग्भ्यां कुड्मलितं बलेन गलितं रूपश्रिया प्रोषितम् ।]
प्राप्तायां यमभूपते नृषु जराधाट्यापि यं सर्वतो
लोभः केवलमेष एव सुभटो हृत्पत्तनं वल्गते ॥ ५२४ ॥

दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः ।
पश्येह मधुकरीणां संचितमर्थं हरन्त्यन्ये ॥ ५२५ ॥

दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः
सन्तश्चेदमृतेन किं यदि खलास् तत्कालकूटेन किम् ।
किं कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रियः
संसारे हि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥ ५२६ ॥

दारिद्र्याद् ह्रियमेति ह्रीपरिगतः सत्त्वात् परिभ्रश्यते
निःसत्त्वः परिभूयते परिभवान् निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥ ५२७ ॥

---

523 Bik3280, Ben 60-10 and 57-4 N15. — BIS. 2074 (1104). Pañc. ed. Koseg. I. 410. ed. Bomb. 366; SRB. p. 178. 999.

524 BORI328 V151 (143)· Om. *b*. — SRB. p. 77. 52; SRK. p. 68. 21 (Prasaṅgaratnāvalī); Var. in both SRB. and SRK. for *cd*) प्राप्तायां यमभूपतेरिह महाधाट्यां धरायामियं, तृष्णा केवलमेकिकैव सुभटी धीरा पुरो नृत्यति।; SS. 35. 1 (var.); SN. 333; SSV. 1092.

525 Bik3280 N80; 3279 N60. — BIS. 2742 (1127) Pañc. ed. Koseg. II. 158. Vikramac. 73. Subhāsh. 36. 93. 166; Śp. 469; SRB. p. 69. 17; SRK. p. 63. 3, p. 222. 6 (Sphuṭaśloka);

526 B N70. — *a*) कल्पशालिभि°. — *d*) संसारो हि मृगेन्द्रजालसदृशो; E3 N43 (42); BORI326 N42. — *a*) कल्पशाखितरलं; RASB7747 N43 (42); Jod 1 N43; Pun2101 N43 (44); Pun697 N43; NS1 N43 (44). — BIS. 2746 (4170). — *b*) ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम्। — *c*) प्रिया. — *d*) ऽपि (for हि. Pañc. 1 in Nitisaṁk. 26. Cat. Cambr. Mss. 10. Subhāsh. 308; SRH. 181. 60 (Kāvyaprakāśa); Sarasvatīkaṇṭhābharaṇa (KM. 94, p. 443) 4. 71; ST. 1. 52; SSD. f. 157a. (*bacd*); JSV. 301. 1;

527 — BIS. 2781 (1145). Mṛcch. 8 [1. 14]. Hit. ed. Schl. I. 128. Johns. 143. ed. Calc. 1830. p. 108; SRB. p. 68. 71; SRK. p. 56-7. 11 (Bh.); Alaṁkārakaustubha (KM. 66, p. 360); Tantrākhyāyikā II. 67, Edgerton II. 40. both निर्द्रव्यो (for दारिद्र्यात् in *a*); SG. f. 36a; SM. 1303; SN. 512; SSV. 1287; SKG. f. 16b.

दिग्गजकमठकुलाचलफणिपतिविधृतापि चलति वसुधेयम् ।
प्रतिपन्नममलमनसां न चलति पुंसां युगान्तेऽपि ॥ ५२८ ॥
दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवेद् गर्भवासे नराणां
बालत्वे चातिदुःखं मललुलिततनुस्त्रीपयःपानमिश्रम् ।
तारुण्ये चातिदुःखं भवति विरहजं वृद्धभावोऽप्यसारः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ॥५२९॥
दुरापूरेण कामेन मोहेन च बलीयसा ।
शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ॥ ५३० ॥
दुर्जनवदनविनिर्गतवचनभुजंगेन सज्जनो दष्टः ।
तद्विषघातनिमित्तं सहसा शान्तिमौषधं पिबति ॥ ५३१ ॥
दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान् निर्गन्तुमेवेहते
जाता वामतयैव संप्रति मम प्रीत्यै नवोढा प्रिया ॥ ५३२ ॥
देवं चन्द्रकलाधरं फणिधरं ब्रह्मकपालाधरं
गौरीवामधरं त्रिलोचनधरं रुद्राक्षमालाधरम् ।
गङ्गोत्तुङ्गतरङ्गपिङ्गलजटाचूडोत्तमां गह्वरं
नीलग्रीवमनादिसिद्धसततं सोमोश्व[?]रक्षाकरम् ॥ ५३३ ॥
देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं देशं नैव पश्यामि यत्र भ्राता सहोदरः ॥ ५३४ ॥

528 C N99 (100) — [a]) °कूर्मकुला° । — [d]) सत्यं (for पुंसां); E3 N109 (10); F1 N99; F4 N99. —[b]) कथमपि विधृतापि नवलवति (sic); BORI329 N93 (88); RASB. 7747 N107 (105); Jod 1 N107; Pun 2101 N109 (110); NS1 N108 (111) — BIS. 1534 (598) begins with कमठकुलाचलदिग्गज. Bhartr. ed. Bohl. extra 23. Haeb. 2. 109. lith. ed. I. 88; SRB. p. 48. 121; SK. 6. 261; PT. 1. 64; SSD. 2. f. 99b; SMV. 9. 42; JSV. 175. 3.

529 F3 V68 (paraphrase of 199). — BIS. 2825. Subhāsh. 106.

530 ISM Kalamkar 195 V119 (122).

531 HU632 extra. f. 5a. — SRB. p. 48. 120.

532 Gujarati P. P. ed. Bhartr. Ś92. — BIS. 2932 (1230) Sāhitya-darpaṇa 40; Śp. 3672 (Śrīharṣa); SRB. p. 318. 14 (Harṣa); SBH. 2072 (Śrīharṣadeva); SKM. 77. 2 (p. 274, Śrīharṣa); SDK. 2. 131. 1 (p. 153, Śrīharṣadeva). 533 J3 extra1.

534 BORI329 N104 (99). — BIS. 7553. Carr. 408; SRB. p. 361. 6; SRH. 76. 1 (Aṅkāvalī); Com. on Candrāloka. 6. 14; Sāhityamīmāṃsā 6 (p. 72); SA. 37. 4; Vālmīkirāmāyaṇa VII; JSV. 99. 5.

देहीति वचनं श्रुत्वा देहस्थाः पञ्च देवताः ।
तत्क्षणादेव नश्यन्ति ह्रीधीश्रीधृतिकीर्तयः ॥ ५३५ ॥

द्यूतं मांसं सुरा वेश्या खेटं चौर्यं पराङ्गनाः ।
महापापानि सप्तैव व्यसनानि त्यजेद्बुधः ॥ ५३६ ॥

द्विरष्टवर्षा योषित्[च]पञ्चविंशतिकः पुमान् ।
अनयोर्नितरां प्रीतिः स्वर्ग इत्यभिधीयते ॥ ५३७ ॥

द्वौ विप्रौ विप्रमग्निं वा दम्पत्योर्नृपनृत्तयोः ।
अन्तरे न हि गन्तव्यं हरस्य वृषभस्य च ॥ ५३८ ॥

धनतनयविपत्तिव्याधिदुःस्थो गृहस्थो यतिरपि नियमस्थो नीतिसुस्थो वनस्थः ।
गुरुपरवशकारी क्लिश्यते ब्रह्मचारी हरिचरणविहारी केवलं धन्यजन्मा ॥५३९॥

धन्यानां नवपूगपूरितमुखश्यामाङ्गनालिङ्गन-
त्रस्तानेकसुखप्रमोदमनसां स्वल्पायते शर्वरी ।
अस्माकं तु कुटुम्बशम्बलकथासंतापचिन्ताज्वर-
ज्वालाजागरजागरूकमनसां सैवातिदीर्घायते ॥ ५४० ॥

धन्यास्तु ये भुवि विभोगकरा मनुष्या बिम्बाधरामृतनिषेवणतत्परा ये ।
अन्येऽपि संततिभवार्णवतोयदक्षा ये पाशमोहमपतीर्य पदं व्रजन्ति ॥५४१ ॥

धन्यास्ते वीतरागा गुरुवचनरतास् त्यक्तसंसारभोगा
योगाभ्यासेऽतिलीना गिरिवरगहने यौवनं ये नयन्ति ।

---

535 NS1 V13. — [d]) श्रीह्रीकान्तिकीर्तयः; ISM Kaḷamkar692 V7. — [a]) वचनाद्द्वारे. — [c]) निर्यान्ति तद्वचः श्रुत्वा. — SRB. p. 73. 6; SRK. p. 60. 15 (Śp.). SN. 500; SSD. 2. f. 138b; SSV. 1270.

536 HU2145 N71 (1). — BIS. 2994 (1262). Vikramaca. 267.

537 BORI329 Ś53 (54); Pun2101 Ś54 (56); BORI Limaye273 Ś30; Somadeva's Yaśastilakacampū (KM. 70. II. p. 251). द्वादशवर्षा योषा षोडशवर्षोचितस्थितिः पुरुषः । प्रीतिः परा परस्परमनयोः स्वर्गः स्मृतः सिद्धिः ॥ (Dhūmadhvaja?).

538 HU2145 N6 (1). — Cf. BIS. 6160 (5013) Vṛddhacā. 7. 5. Berl. MS 255.

539 ISM Kaḷamkar195. N extra1 on marg. last fol. (not as Bhartṛ. Śloka.?)

540 $M_{4,5}$ Ś V-20. — [b]) $M_5$ प्राप्तानेक°. — SDK. 2. 175. 1 (p. 182); SSD. 2. f. 141a. 541 ISM Kaḷamkar846 Ś92.

542 A Ś100. — [a]) $A_1$ com. °संसारसङ्गा; $F_1$ Ś99. — [a]) संसारसङ्गा. — [b]) ब्रह्मज्ञाने (for योगाभ्यासे)....नयन्ते. — [c]) येऽपि (for अन्ये). — [d]) गाढं मृदुशयनतले; BU Ś103; Jod3 Ś98; NS1 Ś103 (203); NS2 Ś98; BORI329 Ś102 (103); Bar1781 Ś103 (106). Some Mss. ये विरक्ता (for वीतरागा in a); RASB G

अन्ये प्रोत्तुङ्गपीनस्तनकलशभराक्रान्तकायां दिनान्ते
कान्तामालिङ्ग्य कण्ठे मृदुतलशयने शेरते तेऽपि धन्याः ॥ ५४२ ॥

धर्मः प्रज्वलितस् तपः प्रचलितं सत्यं च दूरे गतं
पृथ्वी मन्दफला नृपाश् च कुटिलाः शस्त्राधि[ ॑यु ? ]धा ब्राह्मणाः ।
लोकाः स्त्रीषु रताः स्त्रियोऽपि चपला लौल्यं गतास् तापसाः
साधुः सीदति दुर्जनः प्रभवति प्रायः प्रविष्टे कलौ ॥ ५४३ ॥

धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ ५४४ ॥

धातस् तात तवैव दूषणमिदं यत् सापि कस्तूरिका
कान्तारान्तरचारिणोऽस्य पृषतो नाभौ कृता मृत्यवे ।
यद्येनां पिशुनस्य यस्य रसनाकन्दे ऽकरिष्यत्त[स्त]दा
क्लेशो नास्य वधोऽभविष्यदनिशं संतापकर्तु[र्तुः]सतः ॥ ५४५ ॥

धातस् तात विरुद्धोऽपि द्वितयं मा कृथा नृणाम् ।
भृत्यत्वमविवेकत्वं स्नेहमन्यरते जने ॥ ५४६ ॥

धिक् किं जीवितमापदेकनिलयं मित्रात्मबन्धूज्झितं
दीनानाथजनोपकारकरणव्यापारदूरीकृतम् ।
मन्दीभूतशशाङ्कशेखरपदद्वंद्वारविन्दस्मृतिं
व्यालोलायतलोचनास्तनतटप्रश्लेषविश्लेषितम् ॥ ५४७ ॥

---

8553 Ś101; HU1381 Ś19; HU2144 Ś97 (99); Meh Ś104; Bik3279 Ś102 (103); Bik3280 Ś105; GVS2387 V48 and BVB5 V102 (extra). — [a]) ते धन्या ये विरागा…संसारसंगा. — [b]) नगवनगहने. — [c]) येपि. — [d]) गाढं (for कण्ठे). — BIS. 3085 (1313) Bhartṛ. ed. Bohl. extra25; JSV. 306. 2.

543 HU2145 N49 (36). — BIS. 3092. Vet. in LA. (III) 30. Subhāsh. 58; SRB. p. 99. 25; SBH. 3076 (var.); SRK. p. 64. 6 (Sphuṭaśloka).

544 GVS734 N96. — BIS. 3120 (1318). Vṛddhacāṇa. p. 20, 13. 10. Hit. ed. Schl. pr. 25. Johns. 26. Galan. Varr, 195; SRB. p. 159. 255.

545 Bik3276 N extra f. 11b top marg. — BIS. 3140 (only *ab*) Subhāsh. 229; SRB. p. 61. 265 (var.); SRK. p. 23. 13 (var.).

546 BORI329. N64 (59); Pun2101 N63 (64). — [b]) द्वितया मा कृथा वृथा. — [c]) सत्यत्वम्; Pun697 N63; NS1 N63 (64); Bik3279 N57; Bik3280 N76. — JSV. 168. 1.

547 D V129; F1.2 V106; BORI329 V98; Pun2101 V98; NS2 V101 (99); SVP159 V extra 13; Pun2127 V130; Meh V150; Bik3379 V135 (31); Bik3278 and 3281 V127; BORI328 V138 (131).

धिग् धिक् तान् क्रिमिनिर्विशेषवपुषः स्फूर्जन्महासिद्धयो
निष्पन्दीकृतशान्तयोऽपि च तमःकारागृहेष्वासते ।
तं विद्वांसमिह स्तुमः करपुटीभिक्षाल्पशाकेऽपि वा
बालावक्रसरोजिनीमधुनि वा यस्याविशेषो रसः ॥ ५४८ ॥

धीरध्वनिभिरलं ते नीरद मयि मासिको गर्भः ।
उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति ॥ ५४९ ॥

धैर्यं यस्य पिता क्षमा च जननी क्षान्तिः प्रिया गेहिनी
सत्यं मित्रमिदं दया च भगिनी भ्राता मनःसंयमः ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं
ह्येते यस्य कुटुम्बकं मम सखे कस्माद् भयं योगिनः ॥ ५५० ॥

न कुर्यात् पापपुत्रीयं न कुर्याद् वरगोत्रिणी ।
न कुर्याद् विधवा नारी गर्भस्रावी च दुर्मुखी ॥ ५५१ ॥

न कुर्यादभिचारोग्रवश्यादिकुहकक्रियाम् ।
लक्ष्मणेनेन्द्रजित् कृत्याभिचारसमये हतः ॥ ५५२ ॥

न तादृक् कर्पूरे न च मलयजे नो मृगमदे
फले वा पुष्पे वा तव भवति यादृक् परिमलः ।
परं त्वेको दोषस्त्वयि खलु रसाले यदुचितं
पिके वा काके वा लघुगुरुविचारो न हि कृतः ॥ ५५३ ॥

548 — BIS. 3153 (4265) Śantiś. 4. 10. Haeb. p. 426. Śatakāv. 37. Nītisaṁk. 85. Kavyakal.; RKB. fol. 39a (Bh.); SRB. p. 371. 112; SDK. 5. 67. 2 (p. 321, Ballaṇa),

549 BU104/7 N103. — SRB. p. 212. 18; SK. 3. 199; PT. 10. 26; Padyaveṇī 711 (Jagannātha).

550 D V133; F3 V107. — c) दिशोऽथ वसनं. — d) यस्यैतेपि; Y3 V X-11. — a) शान्तिः प्रिया. — b) तपःसंगमः; M1.3-5 V X-11 (10). — a) M3 शान्तिः स्थिरा; M4 क्षान्तिश्चिरं. — b) M4 यथा (for दया). M1.5 तपःसंगमः; M3 मनःसंशयः. — c) M3.4 भूमितटी. — d) M4 एते (for ह्येते). M1.5 तस्माद्भयं।; BORI328 V143 (135). — a) धर्मे मतिर्मोहिनी (for क्षान्तिः प्रिया गेहिनी). — d) वद (for मम). RASB G. 9475 V X-10. — a) शान्तिश्चिरं. — d) एते सन्ति (for ह्येते यस्य); Meh Ś112 and V132; Bik3279 V139 (35) शौर्यं यस्य; HU2133 V102. — BIS. 3169 (1339). Śantiś. 4. 9. in Haeb. 436. Nītisaṁk. 84. Subhāsh. 7. 97; SRB. p. 370. 103; SRK. p. 38. 14 (ST.); SN. 18; SSV. 18; JS. 10.   551 HU2845 N7 (2).

552 — Śp. 1526 (Kṣemendra); SRB. p. 155. 80 (Bh.).

553 X2 extra1. — Śp. 1016; SRB. p. 240. 119; SRK. p. 208. 1 (Śp.); VS. 286; SK. 3. 257; PT. 10. 74; PMT. 229; SG. f. 25a.

न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः ।
भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ॥ ५५४ ॥

न देवे देवत्वं कपटपटवस् तापसजना
जनो मिथ्यावादी विरलतरवृष्टिश् च जलदः ।
प्रसङ्गो नीचानामवनिपतयो दुष्टमनसो
जनः शिष्टा नष्टा अह ह कलिकालव्यतिकरः ॥ ५५५ ॥

न निर्मिता केन च दृष्टपूर्वा न श्रूयते हेममयी कुरङ्गी ।
तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥ ५५६ ॥

न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् ।
न योगसिद्धिं [न] पुनर्भवं वा वाञ्छन्ति पादं सुरजःप्रपन्नम् ॥ ५५७ ॥

न परिहरति मृत्युः पण्डितं श्रोत्रियं वा धनकनकसमृद्धं बाहुवीर्यं नृपं वा ।
तपसि नियमयुक्तं सुस्थितं दुःस्थितं वा वनगत इव वह्निर्दुर्निवार्यः कृतान्तः॥५५८

न भवति भवति च न चिरं भवति चिरं चेत् फले विसंवदति ।
कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ ५५९ ॥

न भिक्षा दुष्प्रापा पथि पथि मठारामसरितः
फलैः संपूर्णा भूर्विटपिमृगचर्मापि वसनम् ।
सुखे वा दुःखे वा सदृशपरिपाकः खलु तदा
त्रिनेत्रं कस् त्यक्त्वा धनलवमदान्धं प्रणमति ॥ ५६० ॥

554 Wai2 extra7, corrupt. — BIS. 3295 (4301). Vṛddhacāṇa. 11. 6; SRB. p. 59. 224; SRK. p. 22. 4 (Sp.); ST. 3. 4; VS. 359; SK. 2. 119; SHV. f. 57b. 582.

555 HU2145 N52 (38). — SRB. p. 99. 13; SRK. p. 64. 1 (ST).

556 A N60. — BIS. 3324 (1409). Vṛddhacāṇa 16. 5. Vikramacarita 45. Subhāsh. 175; SS. 46. 15. 557 NS1 V99.

558 BORI328 V122 (118). — BIS. 3968 (परिहरति न). Subhāsh. 82.

559 BORI329 N101 (96, Corrupt). — SRB. p. 47. 107; SBH. 236; SRH. 31. 22 (Sundarapāṇdya); Alaṁkāraratnākara515. (?) 23 (?); Hemacandra's Kāvyānuśāsana 5. (KM. 71, p. 208 varr); PT: 1. 37; BPB. 285; SSD. 2. f. 125b; SSV. 1521; Js. 459.

560 A V37; B V104; D V38. — [b]) मृगचर्मादि वसनं; Eo.5 (and a few Dhanasāra Mss. like BORI3827-1884-87) V37; F4 V38. — [b]) भुवि विटपिमृगश्चर्मापि (sic); Jod3 V40; Pun2101 V37; Pun697 V36; NS1 V43; NS2 (30); BORI328. V40. — [b]) मृगविटपिचर्माधिवसनं. — [c]) तं सुखे वा Meh V39; Bik3279 V42 (41); Bik3280 V41; BORI329 V38; HU1387 V40. — BIS. 3362 (1429) Bhartṛ. lith. ed. I. 3. 97. also in Subhāsh. 312; Prabandhacintāmaṇi 82; SN. 320. BPS. f. 25a. 154.

न भोगहार्या न च बन्धुहार्या न भ्रातृहार्या न च राजहार्या ।
स्वदेशमित्रं परदेशबन्धुर्विद्यासुधां ये पुरुषाः पिबन्ति ॥ ५६१ ॥

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ ५६२ ॥

नवमेऽधोमुखं विद्याद् दशमे जन्म च ध्रुवम् ।
एवं गर्भस्थितिः प्रोक्ता प्राणिनां भवजन्मनि ॥ ५६३ ॥

न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद् हि पात्रं प्रचक्षते ॥ ५६४ ॥

न विषममृतं कर्तुं शक्यं प्रयत्नशतैरपि
त्यजति कटुतां न स्वां निम्बः स्थितोऽपि पयोहृदे ।
गुणपरिचितामार्यां वाणीं न जल्पति दुर्जनश्
चिरमपि बलाध्माते लोहे कुतः कनकाकृतिः ॥ ५६५ ॥

न वैराग्यात् परं भाग्यं न बोधादपरः सखा ।
न हरेरपरस् त्राता न संसारात् परो रिपुः ॥ ५६६ ॥

न स कश्चिदुपायोऽस्ति दैवो वा मानुषोऽपि वा ।
येन मृत्युवशं प्राप्य जन्तुः पुनरिहाव्रजेत् ॥ ५६७ ॥

न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मः स नो यत्र न चास्ति सत्यं सत्यं न तद् यत् कपटानुविद्धम् ॥५६८॥

---

561 Ady XXV-L 2. after N16 (without number). — SSD. 2. f. 110a; cited in T1 com. on 15 = हर्तुर्याति.

562 C N101 (102); IO1854, extra in fol. 23a; Bik3280, Ben60-10 and 57-4 N12. — BIS. 3396 (1443). Pañc ed. Koseg. I. 147. ed. Orn. 107. ed. Bomb. 131; Śp. 1353; SRB. p. 152. 409; SN. 843; SSV. 1621; JS. 508; SKG. f. 7b. 563 Meh V148.

564 ISM Kaḷamkar 195 N extra 3. — BIS. 3423 (4345) Yājña. 1. 200. Subhāsh. 290.

565 BIS. 3438 (1470) in anuṣṭubh. metre (*ab* only); Śp. 377 (Bh.); SRB. p. 61. 255 (Bh.); SBH. 455; SSD. 2. f. 129a; JSV. 198. 13.

566 BU S106; HU 1387 S92; cited in Y1 com. on यां चिन्तयामि. — BIS. 3452 (1575). Vikramaca. 17.

567 D V143; BORI 328 V163 (154); Bik3279 V157 (53).

568 BORI329 N98 (93) Bik 3279 N61; Bik3280 N81. — BIS. 3483 (1489). Mbh. 5. 1339 (= BORI crit. ed. 5. 35. 49). R. ed. Bomb. 7. 59, 3. 33. Hit. ed. Schl. III. 61. Johns. 64. Galan Varr. 330; Śp. 1344; SRB. p. 174. 884; SRH. 163. 152; Prabandhacintāmaṇi 129; Alaṁkārakaustubha (KM. 60, p. 385); Garuḍamahāpurāṇa 115. 52; SS. 13. 4; Pt. 9. 108; SKG. f. 7a.

न हि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन ।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति ॥ ५६९ ॥

नागो भाति मदेन कं जलरुहैः पूर्णेन्दुना शर्वरी
शीलेन प्रमदा जवेन तुरगो नित्योत्सवं मन्दिरम् ।
वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः
सत्पुत्रेण कुलं नृपेण वसुधा लोकत्रयं धार्मिकैः ॥ ५७० ॥

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ ५७१ ॥

नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि सुरे नारायणे तिष्ठति ।
यं कंचित्पुरुषाधिपं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ ५७२ ॥

नाधीतं शब्दशास्त्रं स्फुटपदविमलं हेतुतत्त्वार्थयुक्तं
श्रोणीभारालसाङ्गी कुचभरनमिता लालिता नो मृगाक्षी ।
विप्रेभ्यो नैव दत्तं न च हुतमनले नार्चितः शंभुदेवो
हा कष्टं मन्दभाग्यो मरणवशगतः कं वरं प्रार्थयामि ॥ ५७३ ॥

नामाप्यन्यतरोर्निमीलितमभूत् तत् तावदुन्मीलितं
प्रस्थाने स्खलतः स्ववर्त्मनि विधेरन्यैर्गृहीतः करः ।
लोकश्चायमदृष्टदर्शनदशादृग्वैशसादुद्धृतो
युक्तं काष्ठिक लूनवान्यदसि तामाम्रालिमाकालिकीम् ॥ ५७४ ॥

569 C N108 (109) [a]) तन्न हि भवति ।; BORI329 N107 (102); Bik3279 N50; Bik3280 N69. — BIS. 3519 (1509). Pañc. ed. Koseg. II. 11. 133. ed. Bomb. 9. 122. Vikramaca. 54. 149; SRB. p. 91. 42; SMV. 8. 26.

570 RASB 7747 V122 (last śl., incomplete). — [a]) कंबलरुहैः; Pun2101 V extra 2, 9 = V117. — [d]) त्वया वसुमती लोकत्रयं विष्णुना (for नृपेण etc.). — BIS. 3545 (1518) Pañcaratna 1. in Haeb. 3. Vikramaca. 87. Subhāsh. 201; SRB. p. 180. 1042; SRK. p. 228. 75 (ST.); VS. 881; SA. 8. 51; SSD 2. f. 150a; SHV. app. I. f. 9a. 37; SS. 10. 32; SK. 6. 97; SL. f. 27a; BPB. 308; JSV. 30. 2.

571 Wai2 Ś95. — BIS. 3547 (1520) Mbh. 5. 1538-9 (= BORI. crit. ed. 5. 40. 6): 13. 2226. Pañc. ed. Koseg. I. 153. ed. Orn. 112. ed. Bomb. 137. Hit. ed. Schl. II. 111. Johns. 113. Vikramaca. 35. Subhāsh. 218. Pañcara. 1. 14. 99 = R. 5. 50. 12; Śp. 1498 (Bhārata, Cāṇakya and Pañcākhyāna); SRB. p. 154. 60; SRH. 54. 7 (Mbh.); Garuḍamahāpurāṇa 109. 40; SHV. f. 97 b. 18; SS. 35. 10; SSD. 2. f. 158b; JS. 409; SKG. f. 4b.

572 — BIS. 3568 (1527). Śantiś. 1. 11. in Haeb. 412; SRB. p. 376. 258; SDK. 5. 53. 2 (p. 312, Bh.); SRH. 200. 31 (Yādavaprakāśa).

573 Ujj6414 V104 (105); HU468 V107. — BIS. 3575 (1530) Bhartṛ. in Schiefner and Weber p. 25.

574 — SBH. 1017 (probably Bhallaṭa) ascribed to Bhartṛ. in preface p. 74?; AMD. 833.

नायं जनो मे सुखदुःखहेतुर्न देवतात्मा गृहकर्मकालाः ।
मनः परं कारणमामनन्ति संसारचक्रं परिवर्तयेद् यत् ॥ ५७५ ॥

नालस्यप्रसरो जलेष्वपि कृतावासस्य कोशे रतिर्
दण्डे कर्कशता मुखे तु मृदुता मित्रे महान् प्रश्रयः ।
आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ ५७६ ॥

नासीत् कश्चित् परित्राता दाता वा वचसोऽपि च ।
शक्नोति कः परित्रातुं कालेन कवलीकृतम् ॥ ५७७ ॥

नित्यमक्लेशलभ्येन शीतलेनाविनाशिना ।
एकेनैवामृतेनैष बोधेन स्वेन पूज्यते ॥ ५७८ ॥

निद्रामुद्रितलोचनो मृगपतिर्यावद् गुहां सेवते
तावत् स्वैरममी चरन्तु हरिणाः स्वच्छन्दसंचारिणः ।
उन्निद्रस्य विधूतकेसरसटाभारेण निर्गच्छतो
नादे श्रोत्रपथं गते हतधियां सन्त्वेव दीर्घा दिशः ॥ ५७९ ॥

नीचा दुःखेन याच्यन्ते प्रयच्छन्ति न याचिताः ।
अथ किंचित् प्रयच्छन्ति न गले न च बालुके ॥ ५८० ॥

नो खड्गप्रविदारिताः करिघटा नोद्वेजिता वैरिणस्
तन्वङ्ग्या विपुले नितम्बफलके नो क्रीडितं लीलया ।
नो जुष्टं गिरिराजनिर्झरझरे झांकारिगङ्गापयो
मातुर्यौवनहारिणा वद सखे जातेन तेनात्र किम् ॥ ५८१ ॥

नो धर्माय यतो न धर्मनिरता नार्थाय यत्ने दशाः
कामोऽप्यर्थवतां तदर्थमपि नो मोक्षः क्वचित् कस्यचित् ।
तत् किं नाम वयं तदत्र घटिता ज्ञातं पुनः कारणं
जीवन्तोऽपि मृता इति प्रवदतां शब्दार्थसंसिद्धये ॥ ५८२ ॥

575 ISM Kalamkar 194 V91 (94).

576 HU2144 N101 (103); Bik3276 N102; Lim930/39 N102. — Śp. 1137; SRB. p. 244. 236; SKM. 110. 66 (Jayavardhana); SRK. p. 198. 5 (Śp.).

577 ISM Gore144 V172. 578 ISM Gore144 V179.

579 Bik3276 N extra (f. 9b marg.). — SRB. p. 231. 51. — [d]) गतधियः सन्त्वेव दीर्घायुषः. 580 A N11.

581 C V52. — [a]) खड्गाग्रैर्न विदारिताः । — [d]) कालोयं परापिण्डलोलुभतया काकैरिव प्रेरितः ।; BORI329 V103. — [a]) नो खड्गप्रविदा°...वैरिणीस्. — [b]) नितम्बकलिके ।; RASB7747 V118 (21); BU V16; Pun2101 V extra 2. 1 = V109; IO 1151b V54; Nag421 V44; HU1376 V52. — SDK. 5. 54. 2 (p. 313).

582 BORI328 V144 (136); Meh V125 and V133; GVS2387 V114. — [a]) न तत्र निरता नार्थाय येनेदृशाः । — [c]) तत्के नाम वयं किमत्र । — [d]) इवेति वदतां । — SRB. p. 375. 223; SM. 1465; SSV. 1448.

नोपभोक्तुं न च त्यक्तुं शक्नोति विषयाञ् जरी ।
अस्थि निर्दशनः श्वेव जिह्वया लेढि केवलम् ॥ ५८३ ॥

नो पश्याम्यसतां मुखं न धनिनां वाचं शृणोम्यश्रवान्
नो मिथ्यागुणकीर्तनैरहरहः संस्तौमि कुस्वामिनम् ।
इत्यालोच्य कबन्ध उद्धतभुजो वृत्तानुबन्धे स्थितो
दोषोपाश्रयसंग्रहव्यसनिनि छिन्तेऽधुना मूर्धनि ॥ ५८४ ॥

नो मेघायितमर्थवारिविरहक्लिष्टार्थिशस्ये मया
नोद्धृत्तप्रतिपक्षपर्वतकुले निर्घातवातायितम् ।
नो वा वामविलोचनामलमुखाम्भोजेषु भृङ्गायितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ५८५ ॥

नो वक्तुं न विलोकितुं न हसितुं न क्रीडितुं नेरितुं
न स्थातुं न परीक्षितुं न पणितुं नो वा सुतं नोदितुम् ।
नो दातुं न विचेष्टितुं न पठितुं नानन्दितुं वेधितुं
नो जानाति जनः स जीवति कथं निर्लज्जचूडामणिः ॥ ५८६ ॥

नो विद्या न च भेषजं न वशता नो बान्धवं नो गुरुं
नो इष्टं [न च] देवता न जननी न स्नेहबद्धा प्रिया ।
नार्थो न स्वजनैर्न किं न हि कृतं शारीरकं नो बलं
नो शान्त्या न सुते सुरासुरनरैः संधीतमायुर्ध्रुवम् ॥ ५८७ ॥

पञ्चाननं परिभवत्युदरेण वेणीदण्डेन पन्नगकुलं शशिनं मुखेन ।
या सा जगत्रयजयप्रथितानताङ्गी बुद्ध्या कया बत बुधैरबला बभाषे ॥५८८॥

पतङ्गमातङ्गकुरङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ॥ ५८९ ॥

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं
नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।

583 Meh Ś78. — BIS. 3833 (1652). Kāvyād. 2. 326. (?)
584 Bik3278 and 3281 V132. 585 — SDK. 5. 54. 4 (p. 313, Bh.).
586 BORI328 V153 (145).
587 BORI328 V120 (no number). — SN. 400; SSV. 279; JSV. 261. 8.
588 H2 Ś74. — SM. 1395; SN. 260; SSV. 1380; JS. 395; JSV. 240. 3.
589 ISM Kalaṁkar195 V85 (88).
590 W N93; Pun2885 N90; NS3 N119; BVB5 V101 (extra). — a) करीरकुटके. — c) वर्षा नैव; Lim1485 V extra1. — BIS. 3895 (1688) Bhartṛ. ep. Bohl. 2, 89. lith. ed. I. 91, II. 93. Galan. 94. Subhāsh. 187; SRB. 93. 96; SRK.

धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत् पूर्वं विधिना ललाटलिखितं तन् मार्जितुं कः क्षमः ॥ ५९० ॥
पन्था खेदसिनो मुग्धे वक्रेणाधरपल्लवैः ।
खण्डिता एव शी[? शां]तं ते शूराधरपयोधराः ॥ ५९१ ॥
परं स्वभाव एवैषो यत् परार्थविधित्सया ।
क्लेशाननुभवन्त्येव स्वयं छायाद्रुमा इव ॥ ५९२ ॥
परदारपरद्रव्यपरद्रोहपराङ्मुखः ।
गङ्गा ब्रूते कदागत्य मामयं पावयिष्यति ॥ ५९३ ॥
परापवादवादेन रमते दुर्जनो जनः ।
काकः सर्वरसान् भुङ्क्ते विनामेध्यं न तृप्यति ॥ ५९४ ॥
परिग्रहोऽतिदुःखाय यद्यत् प्रियतमं नृणाम् ।
अनन्तं सुखमाप्नोति तद्विद्वान्यस्त्य[?] किंचन ॥ ५९५ ॥
परिचरितव्याः सन्तो यद्यपि कथयन्ति नैकमुपदेशम् ।
यास् तेषां स्वैरकथास् ता एव भवन्ति शास्त्राणि ॥ ५९६ ॥
परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत् तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ ५९७ ॥
परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः ।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ ५९८ ॥

---

p. 104. 1 (ST). Cāṇakyanītidarpaṇa 12. 6; SHV. f. 63b. 651 VS. 848; SS. 46. 12; SL. f. 37b; SSD. 4. f. 2a; SLP. 11. 37; SKG. f. 18b.

591 Bik3276 S extra (f. 8b marg.). 592 Śrṅ309 N75.

593 X N160. — BIS. 3923 (1697). Subhāsh. 217; Śp. 667; SRB. p. 154. 46; com. on Candrāloka 5. 103; SA. 27. 48. — b) पराङ्मुखम् । — cd) गङ्गापिपासमागत्य मामसुं पाव° ।; SHV. f. 61a. 611; SM. f. 50b.

594 Wai2 extra6. 595 ISM. Kalamkar 195 V82 (85).

596 B N101. — a) उपचरितव्याः — c) तेषां याः स्वैर°; F1 N98. — a) उपरि चरितव्याः; F2 N101. — a) उपचरितवन्तः; F5 N87. — b) नं सदुपदेशम् ।; BORI329 N92 (87); HU2144 N88 (86) उप°; HU2145 N106 (87); PU496 N88 (87); Bik3280 N106 (104). — BIS. 3956 (1714). Bhartr. ed. Bohl. extra22. Haeb. 2. 108; Śp. 236 (Bh.); SS. 29. 11; SK. 2. 68; SU. 1436; PT. 1. 1; SSD. 2. f. 115b.

597 Wai2 extr4 13. — BIS. 3979 (1729). Cāṇ. 18. in Haeb. 74 in Weber. 73 in Hoefer. Vṛddhacā. 2. 5. Saṁskṛtapāṭhop. 54. Subhāsh. 226. Hit. ed. Schl. I. 71. Johns. 78. Galan Varr. 164. ŚKDr. under परोक्ष and मित्र; SRB. p. 88. 1; SRH. 89. 6 (p. 111, Kauṭilya); SRK. p. 54. 2 (Prsaṅgaratnāvali); Garuḍamahāpurāṇa 115. 49; SSD. 2. f. 142b; SKG. f. 9a.

598 C N104 (5); BORI329 N132 (97); Bik3279 N43; Bik3280 N62. — BIS. 3988 (1736) Hit. ed. Schl. I. 98. Johns. 107; Kavitamṛtak. 96; SRB. p. 156. 152; SBH. 2705; SRH. 163. 54 (Mbh.); SRK. p. 231. 8 (Prasaṅgaratnāvali); SA. 37.5; SHV. f. 92b 22; SK. 6. 198; SL. f. 46a; JSV. 99. 1; SKG. f. 6b.

पातालान् न समुद्धृतो बत बलिर्मृत्युर्न नीतः क्षयं
नो मृष्टं शशिलाञ्छनं च मलिनं नोन्मूलिता व्याधयः।
शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्षणं
चेतः सत्पुरुषाभिमानगणना मिथ्या वहन् खिद्यसे॥ ५९९॥

पात्रापात्रविशेषोऽस्ति धेनुपन्नगयोरिव।
तृणात् संजायते क्षीरं क्षीरात् संजायते विषम्॥ ६००॥

पुंसः स्त्रियां स्त्रियः पुंसां संयोगं प्रति यत् कृतम्।
स शृङ्गार इति ख्यातो रतिक्रीडादिकारणम्॥ ६०१॥

पुंसो वर्षशतं ह्यायुस् तदर्धं वाजितात्मनः।
निष्फलं यदसौ रात्रौ शेतेऽधः प्रापितस्तमः[?] ६०२॥

पुण्यक्षेत्रं विषयविरतिः सत्तपः साधुसङ्गो
दानं वाक्यं कलुषरहितं प्राण्यहिंसा च यज्ञः।
धर्मो जन्तुष्वगतिषु दया जाह्नवी भावशुद्धिः
सम्यग्ज्ञानं भवभयहरं तुष्टिरिष्टा विभूतिः॥ ६०३॥

पुरो वा पश्चाद् वा क्वचिदपि वसामः क्षितितले
किमेवं नश्छिन्नं वचनविभवाक्रीतजगताम्।
गृहे वारण्ये वा कुचकलशहारे मृगदृशां
मणेस् तुल्यं मौल्यं सहजसुभगस्य द्युतिमतः॥ ६०४॥

प्रकाममभ्यस्यतु नाम विद्याः सौजन्यमभ्यासवशादलभ्यम्।
कर्णौ सपत्न्यः प्रविसारयेयुः प्रसारयेदक्षियुगं न काचित्॥ ६०५॥

---

599 D V124. — [b]) मृगलाञ्छनस्य (for शशि° च)।; Eo V117, extra; E3 V extra4; E4 V113 (12, extra); E5 V119 (extra). — [a]) Eo.5 विमोचितो बत बली नीतो न मृत्युः क्षयं। — [b]) Eo नोन्मृष्टं; E4 नोत्सृष्टं। — [d]) Eo.5 लज्जसे (for खिद्यसे); BORI331 V131; RASB V109 (112); F1.2 V101. — [b]) नोन्मृष्टं शशलाञ्छनस्य; F3 V109. — [b]) नो मृष्टं शशिलाञ्छनस्य।; BORI329 V93; GVS2387 V109. — [b]) नोन्मृष्टं शशलाञ्छनस्य। — [c]) भारावरोहः; Jod1 V71; Jod3 V125; Pun2101 V93. — [d]) °पदवी (for °गणना); Pun697 V115; NS2 V84 (83); BVB5 V74; Meh V124; Par V102; Bik3278 and 3281 V121; Bik3272 V130 (20). — Śp. 257; SRB. p. 80. 44; SHV. (f. 78a) 35; SSV. 434; SMV. 7. 20. JSV. 296. 6.

600 Wai2 extra 9. — BIS. 4031 (4526). Prasaṅgābh. 4; SRB. p. 157; 203 (Vyāsa); SBH. 2975.

601 Pun2101. f. 32b, cf. चेष्टा भवति etc.

602 ISM Kalamkar195 V117 (120). 603 Y1 N44.

604 Raj1 V extra2. — SRB. p. 80. 33.

605 GVS2387 V108. — SRB. p. 49. 165.

प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान् ।
सुखहेतुस्तव दुःखी सेवक अन्यस् तु मूर्ख एव ॥ ६०६ ॥

प्रतिदिनमयत्नसुलभे भिक्षुकजनजननि साधुकल्पलते ।
नृपनमनि नरकतारिणि भगवति भिक्षे नमस् तुभ्यम् ॥ ६०७ ॥

प्रथमवयसि पीतं तोयमल्पं स्मरन्तः शिरसि निहितभारा नालिकेरा नराणाम् ।
सलिलममृतकल्पं दद्युराजीवितान्तं न हि कृतमुपकारं साधवो विस्मरन्ति ॥ ६०८

प्रशान्तशास्त्रार्थविचारचापलं निवृत्तनानारसकाव्यकौतुकम् ।
निरस्तनिःशेषविशेषविप्लवं प्रयातुमन्विच्छति शंकरं जनः ॥ ६०९ ॥

प्रातःस्नानमनःप्रसादजननं दुःखप्रविध्वंसनं
शौचस्यायतनं मलापहरणं संवर्धते तेजसाम् ।
रूपज्योतिकरं गदप्रशमनं सत्कर्म चाप्यापनां[?]
नारीणां च मनोहरं श्रमहरं स्नानाद् दशैते गुणाः ॥ ६१० ॥

प्राप्ता जरा यौवनमप्यतीतं बुधा यतध्वं परमार्थसिद्धयै ।
आयुर्गतप्रायमिदं यतोऽसौ विश्रम्य विश्रम्य न याति कालः ॥ ६११ ॥

बन्दी विन्दति पत्रपात्रपदवीं शिष्टैर्विशिष्टैरलं
पुम्भिश्चेदुपलभ्यते रतिसुखं कैणीदृशामादरः ।
उत्पन्ना यदि जागडीषु कविता किं नः कृतं संस्कृतैर्
भूपाले यवने समस्तभुवने वैदग्ध्यमस्तं गतम् ॥ ६१२ ॥

---

606 HU155 N39; Nag421 N38. Āna624 N146; ISM Kalamkar 125 N42 (41); NS3 N46. — BIS. 4217 (1835). Hit. ed. Schl. II. 25. Johns. 24. Sāh. D. 326; SRB. p. 97. 14; SDK. 5. 42. 4 (305); SRH. 124. 15 (Sundarapāṇḍya); SRK. p. 108. 2 (ST). SHV. (fol. 73a) 801; SG. f. 40a; SSD. 2. f. 146a; SKG. f. 9b.

607 D V102; GVS2387 V78; Lim1486 V extra8; BVB5 V108 (extra); Bik3279 V107 (4). — SRB. p. 96. 1; SRK. p. 48. 7 (Śp.); SS. 36. 8; SM. 908; SSV. 889.

608 Mys 582 N63. — BIS. 4249 (1856) Vikramaca. 91. Prasangābh.; Śp. 1029; SRB. p. 51. 220; SKM. 33. 34; SRK. p. 210. 1 (Śp.).

609 D V125; Eo V118. — $^{c}$) °ल्पविस्तरं· — $^{d}$) मनः (for जनः); E5 V120; BORI331 V132; J1 (only up to निवृत्त in *b* after the last śloka); F1.2 V102; BORI328 V134 (28); BORI 329 V94; Pun2101 V94; Pun697 V116; GVS2387 V110 — $^{d}$) प्रगन्तुमन्विच्छति कौतुकं मनः; Jod3 V126; NS2 V86 (85); Śṛṅ 309 V87 — $^{a}$) °विचारणं मनो°. — $^{d}$) प्रकृष्टमन्विच्छति शूलिनं मनः; Meh V126; Bik 3279 V131 (27); Bik 3278 and 3281 V122. — BIS. 4279 (4591) Bhartr. lith. ed. II. 3. 100; Subhāsh. 317; SBH. 3405 (Suśānta).

610 HV2145 N10 (5).

611 — BIS. 4325 (1901) cf. Schiefner and Weber p. 12; Śp. 4165 (Bh.); SRB. p. 374. 196 (Bh.).

612 Wai 2 extra 1 corrupt). — SRB. p. 180. 1052 (var.); SHV. App. I. f. 2b. (order *cdab*).

बन्धुर्वैरिजनायते गुणनिधिः कान्तापि सर्पायते
मित्रं चापि खलायतेऽति सहसा पुत्रोऽप्यमित्रायते ।
श्रीखण्डं दहनायते श्रवणयोः शास्त्रं च शस्त्रायते
जाते पुण्यनिवर्तनेऽतिमहतामर्थोऽप्यनर्थायते ॥ ६१३ ॥

बहवः फणिनः सन्ति भेकभक्षणतत्पराः ।
एष एव हि शेषोऽयं धरणीधरणक्षमः ॥ ६१४ ॥

बाले नीहारकाले मृगमदचरिते तुङ्गवक्षोजलिङ्ग-
त्ताराहारावलीनामभिनवकमलामोदसौगन्ध्यभाजाम् ।
श्रोणीभारालसानामनुदिनमपि ये गाढसंश्लेषवन्तः
सन्तस् ते पुण्यवन्तो जगति किमबलाः प्राणवन्तोऽप्रतीताः ॥ ६१५ ॥

बाले बालमृणालकोमलभुजे मत्तालिमालालके
लीलान्दोलितलोललोचनयुगे तन्वङ्गि यामो वयम् ।
इत्याकर्ण्य वचांसि सा विरहिणी नेत्राम्बुधारानना
एणाक्षी परिपूर्णचन्द्रवदना निःश्वस्य मोहं गता ॥ ६१६ ॥

बाले बाले चकितहरिणीलोचने लोचने मां
दृष्ट्वा दृष्ट्वा क्षिपति च वृथा नाद्य लक्ष्यं तवाहम् ।
शान्तं चित्तं विषयरहितं ज्ञानतः सांप्रतं मे
छिन्ने मूले किमपि तरवे दीयते वारिसेकः ॥ ६१७ ॥

बाहू द्वौ च मृणालमास्यकमलं लावण्यलीलाजलं
श्रोणीतीर्थशिला च नेत्रशफरी धम्मिल्लशैवालकम् ।
कान्तायाः स्तनचक्रवाकयुगलं कन्दर्पबाणानलैर्
दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥ ६१८ ॥

बिम्बाकारं सुधाधारं कान्तावदनपङ्कजम् ।
अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ ६१९ ॥

---

613 ISM Kalamkar 692 V31. 614 HU2145 N101 (82).

615 Pun2885 V90 (91); RASB G 9475 V X-12; HU 2133 V91.

616 E3 extra after Ś (f. 32a); E4 Ś extra 1 (f. 34b). — [b]) Both MSS. तन्वंति. — [c]) Both MSS. विरहणीनेत्रांबुधावानता; SMV. 14. 20; SLP. 10. 3.

617 B V59; F3 V108. — [d]) किमिह (for किमपि); Jod 1 V57. — [b]) माद्यशाखं दुराशम् ।. BVB5 V60. — [b]) माद्यशाखं दुराशम्. — [d]) वारिशेषः; Meh V156.

618 — BIS. 4458 (1970) Śṛṅgāratilaka 1. Kāvyakl. 96; SRB. p. 271. 54; SRK. p. 271. 8 (Bh.).

619 B, Bik3279, BVB5, and Lim1485 Ś15; Jod 1 Ś15 (14). — SRB. p. 194. 15.

बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
प्रायो बन्धुभिरध्वनीव पथिकैः सङ्गो वियोगावहः ।
हातव्योऽयमसार एव विरसः संसार इत्यादिकं
सर्वस्यैव हि वाचि चेतसि पुनः पुण्यात्मनः कस्यचित् ॥ ६२० ॥

बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते ।
न छन्दसां केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फलाः कलाः ॥ ६२१ ॥

ब्राह्मणो जन्मना श्रेयान् सर्वेषां प्राणिनामिह ।
तपसा विद्यया तुष्ट्या किमु मत्कलया[?]युता ॥ ६२२ ॥

भगवन्तौ जगन्नेत्रौ सूर्यचन्द्रमसावपि ।
काले गच्छत एवास्तं नियतिः केन लङ्घ्यते ॥ ६२३ ॥

भयप्रमत्तस्य गृहेष्वपि स्याद् अतः स आस्ते सहषट्सपत्नः ।
जितेन्द्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किंनु करोत्यवद्यम् ॥ ६२४ ॥

भर्ता यद्यपि नीतिशास्त्रनिपुणो विद्वान् कुलीनो युवा
दाता कर्णसमः प्रसिद्धविभवः शृङ्गारदी[क्षागुरुः ।
स्वप्राणा]धिककल्पिता स्ववनिता स्नेहैः समं लालिता
तं कान्तं [प्रविहाय सैव युवती जारं] पतिं वाञ्छति ॥ ६२५ ॥

भर्तृहरिभूमिपतिना रचितमिदं नीतिरीतिविज्ञेन ।
ज्ञाते यत्र न मुह्यति धीरोऽधीरः प्रमाणं स्यात् ॥ ६२६ ॥

भवद्भवनदेहलीविकटतुण्डदण्डाहत-
त्रुटन्मुकुटकोटिभिर्मघवदादिभिर्भूयते ।
व्रजेम भवदन्तिकं तनुमुपेत्य पैशाचिकीं
न तु त्रिदिवसंपदं त्रिदशनाथ नाथामहे ॥ ६२७ ॥

620 — BIS. 4464 (1974). Śāntiś. 1. 20. Haeb. p. 413. Kāvyakal. 23; RKB. f. 39a (Bh.); SRB. p. 370. 93; SDK. 5. 56. 1. (p. 314, Bilhaṇa).

621 RASB 7747 (E type) N24 (a stray from E com.); Pun 2101 N24 (25); NS1 N24 (25). — BIS. 4484. Subhāsh. 73; SRB. p. 64. 11; SS. 39. 7; SK. 2. 170; SSD. 2. f. 105b; Aucityavicāracarcā of Kṣemendra (KM1. p. 150 Māgha).

622 ISM Kaḷamkar 195 N extra (on final fol.).

623 Ady XXI-E-2 N IX-13. — BIS. 4527 (2011). Kāvyād. 2. 172; Śp. 449 (Daṇḍīkavi); SRB. p. 90. 5 (Daṇḍī); SRK. p. 73. 28 (Śp.); SSD. 4. f. 2b.

624 ISM Kaḷamkar 195 V83 (86) corrected from वनेष्वपि स्यादतः in *ab*.

625 HU2145 N1. — SRB. 350. 79; SRK. p. 117. (Sphuṭaśloka).

626 A N105 (final).

627 X2 extra. — [a]) °दण्डाहति-। — [c]) प्रकृतिमेत्य। — [d]) किमित्यमरसंपदं प्रमथनाथ ना° (order *cdab*); BU V10. — SK. 1. 15; Śivastuti of Laṅkeśvara 5 (KM. 1; p. 7).

भारत्या वदनं श्रिया च सदनं गोविन्दकीर्त्या मनो
धर्मेण श्रवणं परैस् तु तरणं शौर्येण बाहुद्वयम् ।
दानेनापि करः [समीक्ष्य सततं] यस्याज्ञया भूतलं
स्थातुं चानवकाशतां कथयितुं कीर्तिस् तु दूरं गता ॥ ६२८ ॥

भास्वान् वेषः कलावान् वचनपरिचयो भ्रूविकारोऽङ्गिराकः
स्पर्शः सौम्यो गुरुश्च स्तनकलशभरास्त्वेरतान्तश् च शुक्रः ।
मन्दो हासस्तमश्रीः कचनिचय इव सुभ्रुवा त्वं च केतुः
सेवामेवं ग्रहास्ते विदधति सुभगे मुञ्च मानग्रहोऽयम् ॥ ६२९ ॥

भिक्षा कामदुघा धेनुः कन्था शीतनिवारिणी ।
अचला च शिवे भक्तिर्विभवैः किं प्रयोजनम् ॥ ६३० ॥

भोगे रोगभयं जये रिपुभयं काये कृतान्ताद् भयं
हर्षे शोकभयं सुखे क्षयभयं वित्ते भयं सर्वतः ।
शास्त्रे वादभयं गुणे खलभयं रूपे जरातो भयं
सर्वं नाम भयान्वितं भज सखे विष्णोः पदं निर्भयम् ॥ ६३१ ॥

भोगे रोगभयं सुखे क्षयभयं वित्तेऽपि भूपाद् भयं
दास्ये स्वामिभयं जये रिपुभयं वंशे कुयोषिद्भयम् ।
माने म्लानिभयं गुणे खलभयं काये कृतान्ताद् भयं
सर्वं नाम भयं भवेत् पुनरहो वैराग्यमेवाभयम् ॥ ६३२ ॥

भो भो बुद्धिविचारचारुमतयः पृच्छामि तद् भण्यतां
किं नारायणनामधेयमसमं पीयूषधाराः किरन् ।
किं वानन्दपरायणं नियमितं किं वा सुधागर्भितं
किं वा स्यूतसुधेव केवलमिदं किं वा परा निर्वृतिः ॥ ६३३ ॥

---

628 Ana (Apte fragment) V151. — SRB. p. 136. 47.

629 Meh Ś73; Bik3275 Ś75.

630 C and HU1376 V57; IO 1151b V60.

631 For this and next śloka see note on भोगे रोगभयं (294). D V136; Par V103; HU2144 V95 (91); Meh V121 and V136 (var.); Bik3279 V144 (40).

632 GVS2387 V104 and BVB5 V111 (extra). — [a]) वित्तेऽग्निभूभृद्भयं। — [b]) रणे (for जये, in GVS only). — [c]) देहे (for काये)। — [d]) सखे भज ततो (for भवेत्पुनरहो)।; BORI329 V96 (95). — [a]) वित्तेऽग्निभूभृद्भयं। — [b]) वंशेषु यो°। — [c]) स्नेहे वैरभयं नयेऽनयभयं। — [d]) सर्वेषामभयं भवेत्पुनरियं।; BORI328 V148 (40). — [a]) वित्तेऽग्निभूभृद्भयं। third pāda omitted. — [d]) भयं भयमहो (for भवेत्पुनरहो); F4 — [a]) वित्तेग्निभूभृद्भयं. — [b]) वंशेषु (for वंशे कु-). — [c]) ग्लानि- (for म्लानि-). देहे (for काये). — [d]) सखेभयमतो (for भवेत्पुनरहो); HU468 V110. — SS. 14. 6 (var.); SU. 1014; SM. 1468; SN. 414; SSV. 1451 (vār). 633 B V100; Jod3 V118.

भो लोकाः शृणुत प्रसूतिमरणव्याधेश् चिकित्सामिमां
योगज्ञाः समुदाहरन्ति मुनयो यां याज्ञवल्क्यादयः ।
अन्तर्ज्योतिरमेयमेकममलं कृष्णाख्यमापीयतां
यत् पीतं परमामृतं वितनुते निर्वाणमात्यन्तिकम् ॥ ६३४ ॥

आतश् चित्त सखे विवेक भगवन्नाचार सर्वे गुणाः
कौलीनत्वमपि क्षमे भगवति व्रीडे सखि श्रूयताम् ।
विद्याभिः परमश्रमेण हि मया नीताः परामुन्नतिं
तत् किं मामपहाय यौवनवने कुत्रापि यूयं गताः ॥ ६३५ ॥

आन्तं याचनतत्परेण मनसा देहीति वाक् प्रेरिता
भुक्तं मानविवर्जितं परगृहे साशङ्कितः काकवत् ।
साक्षेपं भृकुटीकटाक्षकुटिलं दृष्टं खलानां मुखं
यच् चान्नार्थकृतं तदेव कुरुते तत्रापि सज्जा वयम् ॥ ६३६ ॥

मत्तान् वित्तमदेन चित्तजनुषा संजातचित्तभ्रमान्
इन्द्रश् चन्द्र उपेन्द्र इत्यनुदिनं स्तुत्वा नरेन्द्राधमान् ।
द्राक्षातीतरसं दयामयतनुं दाक्षायणीवल्लभं
वीक्षाशिक्षितमन्मथं पशुपतिं साक्षादुपेक्षामहे ॥ ६३७ ॥

मत्तेभकुम्भनिर्भेदकठोरनखराशिभिः ।
मृगारिरिति नाम्नैव लघुतामेति केसरी ॥ ६३८ ॥

मद्वंशजाः परमहापतिवंशजा वा ये भूमिपाः सततमुज्ज्वलधर्मचित्ताः ।
मद्धर्ममेव परिपालनमाश्रयन्ति तत्पादुकाद्वयमहं शिरसा नमामि ॥ ६३९ ॥

मधुरमधुरस्निग्धं चाङ्गं सुचन्दनरूषितं
मृदुभुजलतापाशाश्चामी सुकङ्कणभूषिताः ।
प्रकृतिसुरभिस्वैरालापाः स्मरोदयदायिनो
विरहविधुरस्यैते चित्तं हरन्ति च सेन्द्रियम् ॥ ६४० ॥

---

634 ISM Kalamkar 692 V63; Bik3279 V103 (100); Meh V78 (भे लोकाः शृणुत); Bik3280 V101 (102). — SKM. 132. 6 (p. 457).

635 Jod3 N101 (103); Lim1485 V98.

636 D V95. — [a]) यौवनतत्प°। — [b]) साशङ्कया; BORI328 V99 (97); RASB 9510 V86. — [a]) आतर्याचन°। — [b]) साशङ्कया। — [d]) यज्ज्ञानार्थे°; HU1387 V97; Bik3279 V100 (97); Bik3280 V98 (99). — BIS. 4643 (2079); Śp. 421; SRB. p. 77. 53; ST. 33. 4. — [b]) निःशङ्कया। — [d]) तृष्णे देवि यदन्यदिच्छसि पुनस्तत्रा°; SHV. f. (76b) 859 (begins आतर्याचन°); SSD. 4. f. 7a. 637 Śrn309 V100.

638 Bik3287 N extra (marg. f. 1a). — SBH. 583.

639 ASP1461 extra3. 640 $M_{4.5}$ Ś. 1-20; substitute for 273.

मध्यत्रिवलीत्रिपथे पीने कुचचत्वरे च चपलदृशाम्।
छलयति मदनपिशाचः पुरुषं हि मनागपि स्खलितम् ॥ ६४१ ॥
मर्कटस्य गले बद्धा पुष्पाणामिव मालिका।
अविनीतस्य या लक्ष्मीः सा चिरं नैव तिष्ठति ॥ ६४२ ॥
मर्यादाभङ्गभीतेरमृतमयतया धैर्यगाम्भीर्ययोगात्
न क्षुभ्यन्ते च तावन् नियमितसलिलाः सर्वदैते समुद्राः।
आहो क्षोभं व्रजेयुः क्वचिदपि समये दैवयोगात् तदानीम्
न क्षोणी नाद्रिचक्रं न च रविशशिनौ सर्वमेकार्णवं स्यात् ॥ ६४३ ॥
महाजनस्य संसर्गः कस्य नोन्नतिकारकः।
पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ॥ ६४४ ॥
महेश्वराणां सिद्धानां जीवन्मुक्तशरीरिणाम्।
न क्रियानियमोऽस्तीह स ह्यज्ञस्य प्रकल्पितः ॥ ६४५ ॥
मा गाः प्रत्युपकारकातरधिया वैवर्ण्यमाकर्णय
श्रीकर्णाटवसुंधराधिपसुधासिक्तानि सूक्तानि नः।
वर्ण्यन्ते कविभिर्महार्णवसरिद्द्वागाग्निविन्ध्याटवी-
झञ्झामारुतनिर्झरप्रभृतयस्तेभ्यः किमात्तं फलम् ॥ ६४६ ॥
मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम्।
कीर्तिं च दिक्षु वितनोति तनोति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या ॥ ६४७ ॥

641 Bik3279 Ś99 (100); Bik3282 Ś86. cf. कुचशैल. — Śp. 3346; SRB. p. 267. 334; SKM. 53. 65.

642 E3 N113 (114); F5 N105 (103); Bik3279 N64; Bik3280 N85; BORI329 N91 (94); RASB 7747 N109; Jodl N111; NS1 N113 (116); Pun2101 N114 (115); — SA. (*cdab*) 27. 67 (47). — [b]) मल्लीनां मालिका यथा ॥; SSD. 2. f. 142b. (*cdab*).

643 Bik3276 N extra (f. 62b. top marg.). — SDK. 4. 8. 5 (p. 231, Suvarṇarekha).

644 Meh N108. — BIS. 4755 (2145) Pañc. ed. Koseg. III. 58. Bomb. ed. 61; SRB. p. 86. 2; SRK, p. 89. 13 (Śp.). 645 ISM Gore144 V182.

646 J3 extra6. — SRB. p. 114. 11; SDK. 5. 40. 4 (Bilhaṇa).

647 G1 M1-3 N 11. 10. — BIS. 4807 (2174) Vikramaca. 127; SRB. p. 30, 14; SBH. 3445; SRK. p. 42. 3 (Sphuṭaśloka); SU. 1431; PT. 3. 28; BPB. 5; SSD. 2. f. 109; SKG. f. 11b.

मानमुद्वहतां पुंसां वरमापत् पदे पदे ।
मानहीनं सुरैः सार्धं विमानमपि संत्यजेत् ६४८ ॥

माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रिया
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते ।
तृष्णे त्वामनुबध्नता फलमियत् प्राप्तं जनेनामुना
यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥ ६४९ ॥

मालतीकुसुमस्येव द्वे गतीह मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ६५० ॥

मासैरष्टभिरह्ना च पूर्वेण वयसा पुनः ।
नरस् तत् कर्म कुर्वीत येनान्ते सुखमेधते ॥ ६५१ ॥

मितमायुर्व्ययोऽनित्यं नैति यातं कदाचन ।
परामृशन्ति तदपि न भवं भोगलोलुपाः ॥ ६५२ ॥

मित्रं स्वेच्छतया नृपं नयगुणैर्लुब्धं धनैरीश्वरं
कार्येण द्विजमादरेण युवतिं प्रेम्णातिनीचं स्तवैः ।
बन्धुं च क्षमया गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं
विद्याभी रसिकं रसेन सकलं शीलेन कुर्याद्वशम् ॥ ६५३ ॥

मुक्ताभिः शुक्तिजीवैः करगतवलयैः कच्छपैर्वा करीन्द्रैर्
भूषासंबद्धहेमान्तरगतकलया लाक्षया वृक्षवर्गैः ।
कौशेयी कीटवृन्दैः सुरधुनि सततं प्राप्यते मुक्तिरेभिर्
एताभिः सुन्दरीभिः किमुत तनुभृतां ज्ञानभाजां वदामः ॥ ६५४ ॥

मुक्ताहार गुणीभूय नोपसर्प्यः स्तनस् त्वया ।
विभवे यस्य काठिन्यं व्यर्थं तदुपसर्पणम् ॥ ६५५ ॥

648 Bik3280 N35; PU496 N29; Bik3278 and 3281 N31; Pun2101 on top marg. as N32; BSM Kalamkar 195 N30 (31); Ujj6414 N32; HU2145 V39 (29). — BIS. 4815 (2180) Bhartr. in Schiefner and Weber. p. 23.

649 — SRB. p. 77. 51; SKM. 126 22 (p. 440, Bh.); SRH. 175. 30 (Bhallata); SRK. p. 68· 20 (Sphutaśloka); Bhallataśataka 7 (KM. 4, p. 141); SSD. 4. f. 7b.

650 F5 N37; W N104; HU2145 N53 (39); PU496 N38; Bik3280 N44. Substitute for 34. — BIS. 708. 651 Nag299 N120.

652 — SU. 1006 (Bh.); Śp. 4092; SRB. p. 367. 5.

653 Śrṅ309 N81. — BIS. 4853 (2197). Nītiratna 1 in Haeb. 1 in Petrow. 37, Kāvyakal. 1, Kavyas. 8, Kavitāmṛtak. 48. ŚKDr. under मूर्खः. Carr. 475; Sp. 1551; SRB. p. 178. 1009; SRK. p. 235. 53 (ST.).

654 HU2145 N32 (22).

655 Wai2 Ś100. — c) वैभवे. — SRB. p. 246. 24; SK. 6. 52.

मुग्धस्य बाल्ये कौमारे क्रीडतो याति विंशतिः ।
जरया ग्रस्तदेहस्य यात्यल्पस्य च विंशतिः ॥ ६५६ ॥

मुण्डं शिरो वदनमेतदनिष्टगन्धं गात्रं मलेन मलिनं गतसर्वशोभम् ।
भिक्षाटनेन भरणं च हतोदरस्य कष्टं तथापि मनसो मदनेऽस्ति वाञ्छा ॥ ६५७ ॥

मुधा मुग्धे दृष्टिं तरलतरतारां वितनुषे
यथा वृत्तिः पूर्वं मम न मनसः संप्रति तथा ।
स एवाहं सैव त्वमसि पुनरन्तः सति शिवे
मनोभूतो भूयः प्रविशितुमलं दाहचकितः ॥ ६५८ ॥

मूर्खत्वं हि सखे ममातिरुचिरं मूर्खस्य चाष्टौ गुणा
आलस्यं बहुभोजनं मुखरता रात्रौ दिवा सुप्तता ।
कार्याकार्यविचारणैकबधिरो मानापमानौ समौ
विद्याशास्त्रविनोदगीतरहितो मूर्खः सुखं जीवति ॥ ६५९ ॥

मृत्योः सेनां किमेनां न कलयसि जरां वायुवाहाधिरूढां
प्रौढा[ढा ?]न् भोगान् पुरोगान् नगरमपि नवद्वारमार्गैः प्रविष्टान् ।
दन्तान् पातान् दिगन्तान् भयचकितविपर्यस्तवेशांश् च केशान्
सुप्तोऽस्यद्यापि जीव स्मरसि न चरणौ त्वं कुतो माधवस्य ॥ ६६० ॥

मृदुत्वं मृदुभिः श्लाघ्यं काठिन्यं कठिने जने ।
भृङ्गः क्षिणोति काष्ठानि कमलानि दुनोति न ॥ ६६१ ॥

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशास्त्रनिरताः कर्मेति मीमांसकाः
सोऽयं नो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥ ६६२ ॥

यत्तः कान्तासुखो श्लिष्टं यत्तः संस्कृतवाक्य ह ।
यत्र गीतरसौ भिन्नः तच्छत्रं वितरं विदुः ॥ ६६३ ॥

---

656 ISM Kaḷamkar195 V118 (121).

657 D and Lim930/39 V20. — BIS. 4896 (*acbd*). Subhāsh. 76.

658 Jod3 V119; Meh V107. — *c*) °पुरतो तिष्ठति शिवे. — *d*) मनो भूर्नो भूयः; Lim885/1 V102.

659 BORI326 N104. — BIS. 4910 (4733). Udbhaṭa in ŚKdr. under निश्चिन्त:. Subāsh. 109 (with our readings); SRB. p. 41. 66; SRK. p. 36. 21 (BIS.); SS. 15. 1; SN. 699; BPS. f. 28a. 173; SSD. 2. f. 132a; SSV. 767; JSV. 209. 1.

660 Meh V84. 661 Bik3276 N extra (f. 10a. marg.).

662 RASB9510 N1. — SRB. p. 15. 27; SS. 2. 58; JSV. 1. 31; Hanūmannāṭaka 1. 3. 663 F2 Ś99; Nag1087 Ś98 (99, corrupt); Bik3275 Ś109.

यत्नादपि कः पश्यति शिखिनामाहारनिर्गमस्थानम् ।
यदि जलदनिनदमुदितास् त एव मूढा न नृत्येयुः ॥ ६६४ ॥

यथा स्रग्वी तूर्यैर्जनपरिवृतो वध्यपुरुषः
प्रयातव्यस्थानं निपतति विषादे प्रतिपदम् ।
तथा हे भोगस्था दिवसदिवसे मृत्युनिकटं
व्रजन्तो मा यूयं भवत विभवैर्दृप्तमनसः ॥ ६६५ ॥

यदभावि न तद्भावि भावि चेन् न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ ६६६ ॥

यदासौ दुर्वारः प्रसरति मदश् चित्तकरिणस्
तदा तस्योद्दामप्रसररसरूढैर्व्यवसितैः ।
क्व तद् धैर्यालानं क्व च निजकुलाचारनिगडः
क्व सा लज्जारज्जुः क्व विनयकठोराङ्कुशमपि ॥ ६६७ ॥

यदि धनिनः सत्पुरुषा यदि च सुरूपाणि परकलत्राणि ।
अनुपचितसुकृतसंचय तत्र हृदय किमाकुलीभावः ॥ ६६८ ॥

यदि सा प्रमदा ननु रम्यरता प्रमदा शुभदा सुखदा च सदा ।
यदि सा वनिता हृदये निहिता क्व जपः क्व तपः क्व समाधिविधिः ॥ ६६९ ॥

यदेते साधूनामुपरि मुखरा एव धनिनो
न सावज्ञैरेषामपि च निजवित्तव्ययभयम्
न वा क्लेशोऽमुष्मिन्नपरमनुकम्पैव भवति
स्वमांसत्रस्तेभ्यः क इह हरिणेभ्यः परिभवः ॥ ६७० ॥

---

664 — BIS. 5051 (2281) Bhartr. in Schiefner and Weber. p. 12. Pañc. ed. Koseg. I. 458. ed. Bomb. 108; Śp. 873 (Bh.); SRB. p. 226. 170 (Bh.); SBH. 964; SRK. p. 191. 4 (Sp.).

665 M1.5 V VIII-4. — a) M5 जनपतिवृतो. — b) M4 प्रायाद्वध्यस्थानं; M5 प्रयातव्यस्थानं.

666 BORI329 N108 (103); Nag299 N118; Bik3279 N52; Bik3280 N71 — BIS. 5181 (2342) Hit. Pr. ed. Schl. 28. Johns. 29. cf. 2487 (1509), 3519; SRB. p. 162. 429 (Vyāsa); SBH. 2662; SRH. 200. 26; Tantrākhyāyikā II, 113; Edgerton II. 68.

667 — BIS. 5203 (2358). Śantiś. 1. 22. in Haeb. 414. Kāvyakal. 24. Śatakāv. 24; SRB. p. 368. 48; SDK. 5. 62. 2 (p. 318; Bh.).

668 B N108; C N100 (101); E3 N112 (113); RASB G7747 N108; I N104 (105); BORI329 N96 (91). — cd) °संचयो न च हृदयं; Jodl N110; Pun2101 N112 (113); NS1 N111 (114). — SHV. f. 1b. 13; SK. 6. 270; JSV. 302. 2. 669 Bik3277 Ś 1-10.

670 — BIS. 5257 (2380). Śantiś. 3. 23. in Haeb. 424. Kāvyakal. 31. Śatakāv. 34. Nitisamk. 80; SRB. p. 72. 55. (var.); SDK. 5. 40. 2 (p. 304, Bh.).

यद्यपि चन्दनविटपी विधिना फलकुसुमवञ्चितो विहितः ।
निजवपुषैव परेषां तथापि संतापमपनयति ॥ ६७१ ॥
यद्यपि न भवति हानिः परकीयां चरति रासभे द्राक्षाम् ।
असमञ्जसं च दृष्ट्वा तथापि खलु खिद्यते चेतः ॥ ६७२ ॥
यद्यपि भवति कुरूपो वस्त्रालंकारवेषपरिहीनः ।
सज्जनसभोपविष्टो राजति विद्याधिकः पुरुषः ॥ ६७३ ॥
यद्यपि रटति सरोषं मृगपतिपुरतोऽपि मत्तगोमायुः ।
तदपि न कुप्यति सिंहो विशेषपुरुषेषु कः कोपः ॥ ६७४ ॥
यद्यपि विधिवैगुण्यात् सिंहः पतितोऽपि दुस्तरे कूपे ।
तदपि हि वाञ्छति सततं करिकुम्भविदारणं मनसा ॥ ६७५ ॥
यद्येतत्प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः
प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभाजस्तरुण्यः ।
तत् संसारादसारादुपरतमुनयः प्राप्नुवन्त्युत्तमां द्याम्
आयासैर्वर्जिताङ्गा विकसितहृदया मोक्षमार्गे व्रजन्ति ॥ ६७६ ॥
यद् वंशो विशदो यदङ्गमगदं यद् यावदिच्छं धनं
यत्सौजन्यमभङ्गुरं यदनघं शीलं यदघ्र्यं यशः ।
यत् पत्नीसुवरत्नमूर्यदमिता प्रज्ञा सभाचातुरी
यच्च चायुर्विपुलं तदीश सकलं त्वद्भक्तिवल्ल्याः फलम् ॥ ६७७ ॥
यद् वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटुं मृषा
नैषां गर्वगिरः शृणोषि न पुनः प्रत्याशया धावसि ।

671 Es N111 (112); RASB G7747 N107; I N103 (104); Bik3280 N125; BORI329 N95 (90); Jodl N109; Pun2101 N111 (112); NS1 N110 (113). — BIS. 5278. Subhāsh. 123; Śp. 995; SRB. p. 237. 41 (Bhaṭṭāditya); SBH. 793 (Bhaṭṭadityaka); SRK. p. 205. 5, p. 218. 21 (Śp.); ST. 18. 6; Kāvyamīmāṁsā 4. (Gaekwar Or. Series I, (p. 80); VS. 281 (Bhaṭṭāditya); Āryāsaptaśatī of Govardhana. 487 (KM. 1. p. 197); SK. 3. 246; SSV. 558; SMV. 9. 14.

672 Meh N64. — BIS. 5281. Subhāsh. 296; Śp. 1026; SRB. p. 241. 137; SRK. p. 210. 1 (Sphuṭaśloka.).

673 NS1 Ś4; Bik3287 N extra5. — SHV. f. 31b.101. — [a]) विरूपो. — [cd]) तदपि सभाजनमध्ये भ्राजति etc.; SK. 6. 199; SG. f. 17a; SSD. 2. f. 108b; SSV. 746.

674 BORI329. N114 (109); HU2145 N28 (20). — SRB. p. 229. 17; SA. 27. 14; Alaṁkāraśekhara of Keśavamiśra 9. (KM. 50, p. 25); SK. 3. 197; SG. f. 18b; SSD. 2. f. 102b.

675 C N107 (108); BORI326 N107 (108). — SKM. 22. 4 (p. 86); SG. f. 14a; SSD. 2. f. 36a; SMV. 28. 5; SKG. f. 21b.

676 Bik3287 Ś34. (cf. 97). 677 BORI328 V131 (125); SMV. 25. 6.

678 E5 V extra2. — BIS. 5292 (2394). Śantiś. 1. 14. in Haeb. 412. Kāvyakal. and Śatakāv. 23. Kuvalayānanda 110 (89); SRB. p. 233. 119; SDK.

काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन् मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ ६७८ ॥

यस्माच् च येन च यदा च यथा च यच् च
यावच् च यत्र च शुभाशुभमात्मकर्म ।
तस्माच् च तेन च तदा च तथा च तच् च
तावच् च तत्र च विधातृवशादुपैति ॥ ६७९ ॥

यस्मिञ् जीवति जीवन्ति बहवः स तु जीवति ।
बकोऽपि किं न कुरुते हिंसास्वोदरपूरणम् ॥ ६८० ॥

यः षट् सपत्नान् विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम् ।
अत्येति दुर्गाश्रित ऊर्जितारीन् क्षीणेषु कामं विचरेद् विपश्चित् ॥ ६८१ ॥

याचते त्रिचतुरः पयःकणांश् चातको जलधरं पिपासया ।
सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ ६८२ ॥

यातं यौवनमधुना वनमधुना शरणमस्माकम् ।
स्फुरदुरुहारमणीनां हा रमणीनां गतः कालः ॥ ६८३ ॥

यामः स्वस्ति तवास्तु रोहिणगिरे मत्तः स्थितिः प्रच्युता
वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः ।
भ्रातस् ते मणयो वयं यदि भवन्नामप्रसिद्धास् ततः
किं शृङ्गारपरायणाः क्षितिभुजो नाङ्गीकरिष्यन्ति नः ॥ ६८४ ॥

यामो दुश्चेष्टधारां स्वतनुविगलितां तां पिबामो न मद्यं
पञ्चानामिन्द्रियाणां विषयनिरसनं यत् तदश्नो न मांसम् ।
आलिङ्गामो वयं चेत् कृशकुटिलतनु सूक्ष्मणीतां न नारी
शून्ये चित्ता(?)प्रवेशे रविशशिमिथुने मैथुनं तन् न योनौ ॥६८५॥

---

5. 42. 3 (p. 305, Śilhaṇa); SRK. p. 180. 10 (Śp.); Alaṁkārakaustubha (KM. 66) p. 328; SK. 2. 217, 3. 177; Padyaveṇī 713; SSD. 2. f. 45a.

679 Ady XXIX-E-2. N IX-15. — BIS. 5343 (2418). Pañc. ed. Koseg. II. 18. ed. Bomb. 17. Hit. ed. Schl. I. 34. Johns. 41; SRB. p. 92. 71; SRK. p. 76. 4 (Hitopadeśa). SMV. 8. 2[illegible].

680 X N24. — BIS. 5348 (2419) Pañc. ed. Koseg. I. 28. ed. Orn. 10. ed. Bomb. 23. Edgerton I. 8. Hit. ed. Schl. and Johns. II. 35. Vikramaca. 4; SRB. p. 98. 6; SRH. 102. 5; SSD. 2. f. 96a. 681 ISM Kaḷamkar195 V84 (87).

682 Y2 N28; Śrn309 N28. — SRB. p. 49. 160 (transp. याचते and चातको); SHV. (f. 69a) 737; SSD. 2. f. 107a.

683 BORI326 Ś99; Ujj6414 Ś103; GVS2317 V1. — [b]) वारणम् (for शरणम्); Lim-85/1 Ś100; Lim1485 Ś110; BVB5 V1. — Śp. 4160; SRB. p. 374 207; SBH. 3394; SDK. 5. 52. 3 (p. 311, begins with गलितं for यातं); SM. 1127; SSV. 1112.

684 X2 extra6. — SRB. p. 215. 15; SBH. 911 (Govindarāja); SKM. 28. 12 (p. 99, Simhapeya; in footnote, Govindarāja).

685 GVS2387 V30; Bik3279 V52 (51), corrupt.

यावत् स्वस्थमिदं देहं यावन् मृत्युश् च दूरतः।
तावदात्महितं कुर्याः प्राणान्ते किं करिष्यसि ॥ ६८६ ॥

यासामंशुकवातेन दीपो निर्वाणतां गतः।
तासामालिङ्गने पुंसां नरके पतनं कुतः ॥ ६८७ ॥

यास्यति जलधर समयस् तवापि वृत्तिर्लघीयसी भविता।
तटिनि तटद्रुमपातनपातकमेकं चिरस्थायि ॥ ६८८ ॥

याः पश्यन्ति प्रियं स्वप्ने धन्यास् ताः सखि योषितः।
अस्माकं तु गते कान्ते गता निद्रापि वैरिणी ॥ ६८९ ॥

युवा युवत्या सार्धं यन् मुग्धभर्तृवदाचरेत्।
अन्तर्विवृतसङ्गश् चेदसिधाराव्रतं हि तत् ॥ ६९० ॥

यूनामनङ्गं जयतां विशालाः शीलाश् च लीलागृहचन्द्रशालाः।
गात्राणि पात्राणि विलासिनीनां मध्यं च वेदी भणितं च मन्त्राः॥६९१॥

येन यत्र च भोक्तव्यं सुखं वा दुःखमेव वा।
स तत्र रज्ज्वा बद्ध्वैव बलाद् दैवेन नीयते ॥ ६९२ ॥

ये नित्यं व्रतमन्त्रहोमनिरता ध्यानाग्निहोत्राकुलाः
षट्कर्माभिहृतास् तपोधनधनाः साधुक्रियाः साधवः।
शीलप्रावरणा गुणप्रवरणाश् चन्द्रार्कतेजोधिका
मोक्षद्वारकपाटपाटनभटास् ते यान्ति परमां [?] गतिम् ॥ ६९३ ॥

ये निन्दन्ति परान् स्तुवन्ति च तथा स्त्रीषु निदा कुर्वते
ये तस्यन्तरमामनन्ति यत मे सौमित्रिमित्रादिषु।
ये भुञ्जन्ति च नि * * रायवशतो भोज्यं तथा भुञ्जते
किं तैरुक्तमपत्रपैर्बत वचस्संन्यस्यते तद्वचः ॥ ६९४ ॥

ये प्राप्ते व्यसनेऽप्यनाकुलधियः संपत्सु नैवोन्नता
प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणोपयोगैरपि।

686 — BIS. 5480 (4878). Vṛddhacān. 4, 4 (3); SRB. p. 161. 361 (Bh.).

687 C Ś32. — BIS. 5501. Subhāsh. 33; SRB. p. 251. 9; SS. 44. 22; SL. f. 36a; JSV. 241. 1. 688 BU114/7 N104. — SRB. p. 218. 3.

689 Wai2 Ś94. — BIS. 5461. Subhāsh. 19; Śp. 3434; SRB. p. 283. 3 (B); SRK. p. 132. 99 (Śp.). 690 F3 N15; Tan4915 N16.

691 X Ś21; Par Ś20.

692 Ady XXIX-E-2. N IX-14. — SRB. p. 91. 33. 693 NS1 V101.

694 BORI328 V63.

695 Nag299 N117. — SHV. f. 45a. 310 (Bh.). — d) ते भूमण्डलमण्डनैक;

ह्रीमन्तः स्वगुणप्रशंसनविधावन्यस्तुतावुत्सुका
धिग् धात्रा कृपणेन येन न कृताः कल्पान्तदीर्घायुषः ॥ ६९५ ॥

येऽमी कूर्मकचाः सकङ्कणरणत्कर्णाटसीमन्तिनी-
हस्ताकर्षणलालनैव सुभगाः प्राप्ताः परामुन्नतिम् ।
तेऽमी संप्रति पापिनापि न भुजभ्राम्यं निशातक्षुरं
क्षुण्णाः क्षोणितले लुठन्ति पतिताः प्राप्ताः पराध्याः इव ॥ ६९६ ॥

येषां न विद्या न तपो न दानं ज्ञानं च शीलं न गुणो न धर्मः ।
ते मर्त्यलोके भुवि भारभूता मनुष्यरूपेण मृगाश् चरन्ति ॥ ६९७ ॥

येषां वल्लभया समं क्षणमिव क्षिप्रं क्षपा क्षीयते
तेषां शीतकरः शशी विरहिणामुल्केव संतापकृत् ।
अस्माकं च न वल्लभा न विरहस् तेनोभयभ्रंशिनाम्
इन्दू राजति दर्पणाकृतिरसौ नोष्णो न वा शीतलः ॥ ६९८ ॥

येषामज्ञानमूढं प्रचरति न मनो गूढशास्त्रान्तराले
ते विद्वच्चक्रवाले परुषमपरुषं साट्टहासं हसन्तु ।
हंसानां वै हसन्तां मृदुसलिलतले कूजितं कूपकूले
भेकानां कारभाजः कति कति न वचो दुर्वचो व्याहरन्ति ॥ ६९९ ॥

योगेंद्रं [च] फलं ददातिमजरा राज्ञाय कस्मै पुनः
राज्ञेन दज एव भर्तुमु[म]नयः वंठाय कस्मै पुनः
वंठेन दज हिण्य पु[प]ण्ययुवती विप्राय वारस्त्रिय
विप्रेण दज एव देव सततं राज्ञं प्रदत्तं पुनः ॥ ७०० ॥

योऽन्तस्तत्त्वपरार्थसिद्धिविधनं जानात्यसौ पण्डितस्
तत्त्वे शाश्वतमर्जितं निरुपमं यो वेत्त्यसौ पण्डितः ।
संसारोत्तरणे विवेकपटुता यस्यास्त्यसौ पण्डितः
शेषाः कायविडम्बिनो विषयिणः सर्वे जनाः पण्डिताः ॥ ७०१ ॥

---

तिलकाः सन्तः कियन्तो जनाः।; Śp. 248; SRB. p. 52. 256; SRK. p. 11. 10 (Sphuṭaśloka). 696 BORI328 V141 (134).

697 W N13. — BIS. 5573 (2525) Bhartṛ. ed. Bohl. extra3. lith. ed. I. 2. 12, II. 13 Galan 14. Vṛddhacāṇ. 124. Subhāsh. 154; SRB. p. 40 32; SRK. p. 35. 10. (Sphuṭaśloka); SA. 7. 11 (fol. 10a); Garuḍamahāpurāṇa 109. 48 (d only); SS 6. 10; PT. 8. 21; SMV. 5. 9.

698 Meh V154 — Śp. 4106 (Bhojarāja); SRB. p. 369. 77 (Bhojarāja).

699 HU2145 V94 (76).

700 Bik3277 N1-2. (just before अं चिन्तयामि; explanatary verse in colloquial Sanskrit).

701 RASB9510 V38; PU496 V25 (24). — a) °सूत्रपरार्थ°. — d) जनाः संभिताः

रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् ।
असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ ७०२ ॥
रतेरिव निधानानि सुखानामिव राशयः ।
अमृतस्येव कुण्डानि निर्मिताः केन योषितः ॥ ७०३ ॥
रत्नाकरं सकलगर्भमशेषसारं त्यक्त्वा प्रयाति सरितस्तटहंसराजः ॥ ७०४ ॥
रत्नाकरे परिहृता वसतिः किमन्यदङ्गीकृतः कठिनवेधनदुःखभारः ।
वक्षोजकुम्भपरिरम्भणलोलुपेन किं किं न तेन विहितं बत मौक्तिकेन ॥७०५॥
रत्नाकरः किं कुरुते हि रत्नैर्विन्ध्याचलः किं करिभिः करोति ।
श्रीखण्डखण्डैर्मलयाचलः किं परोपकाराय सतां विभूतयः ॥ ७०६ ॥
रथ्यान्तश्चरतस् तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासं च सकौतुकं च सकृपं दृष्टस्य तैर्नागरैः ।
निर्जीवीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटी भिक्षां विलुञ्चिष्यति ॥ ७०७ ॥
रम्यं हर्म्यतलं नवाः सुनयना गुञ्जद्द्विरेफा लताः
प्रोन्मीलन्नवमालतीसुरभयो वाताः सचन्द्राः क्षपाः ।
यद्येतानि जयन्ति हन्त परितः शास्त्राण्यमोघानि मे
तद् भोः कीदृगसौ विवेकविभवः कीदृक् प्रबोधोदयः ॥ ७०८ ॥
राजते राजमञ्जाया एष बिम्बाधरव्रणः ।
सुधां पीत्वेव कान्तेन तच्छेषोऽयं समुद्रितः ॥ ७०९ ॥
राजन्नमात्येषु पुरातनेषु चिरं स्थिरा तिष्ठति राज्यलक्ष्मीः ।
नूनं शरावेषु नवेषु वारि न्यस्तं समस्तं प्रलयं प्रयाति ॥ ७१० ॥
राजा दुर्जनसंपर्कात् सर्वं दहति तत्क्षणात् ।
सलिलं पतितं तप्ते तैले दन्दह्यते न किम् ॥ ७११ ॥

---

702 E N29; F1 N24. — [c]) तु (for च); F4 N20; J1 N84 (a few letters om. in [b]). Bar5199 N36; Bik3279 N13; Bik3280 N26; Bik3278 and 3281 N22. — BIS. 5690 (2578) Bhartṛ. ed. Bohl. extra13. Haeb. 2. 22; SRB. p. 84. 14; SBH. 251. SS. 26. 26; PT. 1. 51. 703 Wai2 Ś66. 704 Wai2 N88 (only the half śloka is given).

705 Wai2 Ś99. — SRB. p. 246. 22.

706 Meh V138; Bik3287 N extra1. — BIS. 5705 (2584) Nītipradīpa1 in Haeb. 526. Kāvyakal. 12. Subhāsh. 107; SRB. p. 49. 171.

707 RASB5592 (Oriya) V X-9. — SRB. p. 370. 88; SDK. 5. 60. 3 (p. 317, Vallaṇa). 708 — SRB. p. 345, 45 (Bh.); Prabodhacandrodaya 1. 12.

709 H Ś99; F3 Ś100; F4 Ś108; BVB2 Ś.01 (100); GVS 2387 Ś100; ISM Kaḷamkar195 Ś99 (100); Meh Ś102. — SRB. p. 328. 2.

710 Bik3279 V4. 711 Bar5199 N108.

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार ॥७१२

रामस्य व्यसनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य विपदं भीष्मस्य शत्रोर्हतिम् ।
विष्णोर्वामनतां तथार्जुनवधं संचिन्त्य लङ्केश्वरं
सर्वं दैववशादुपैति पुरुषः कः कं परित्रायते ॥ ७१३ ॥

रामाणां रमणीयमूरुयुगलं स्वैरं नितम्बस्थली
पृथ्वीं चन्द्रविनिद्रमास्यमतुले नेत्रे स्तनौ प्रोन्नतौ ।
यद्येतानि जगत्त्रयीजयविधौ शस्त्राणि चेतोभुवः
सौख्यानि प्रलपन्तु हन्त कुधियः खेदासहिष्णून्यपि ॥ ७१४ ॥

रामोऽपि भर्ता गणको वशिष्ठः सूर्योऽभिषेकी शुभलग्नचन्द्रः ।
सुखं न भुक्तं परमेषु सीता न कर्मणः कोऽपि बली समर्थः ॥ ७१५ ॥

रामो येन विडम्बितोऽमृतमयश् चन्द्रः कलङ्कीकृतः
क्षाराम्भः सरितांपतिश् च नहुषः सर्पः कपाली हरः ।
माण्डव्यो वधशूलपीडिततनुर्भिक्षाभुजः पाण्डवा
नीतो येन रसातलं बलिरसौ तस्मै नमः कर्मणे ॥ ७१६ ॥

हृष्टे का परपुष्टे मन्दे का हन्त मारुते चर्चा ।
त्वयि गतवति हृदयेशे जीवनदातापि जीवनं हरति ॥ ७१७ ॥

रे दारिद्र्य नमस् तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
अहं सर्वत्र पश्यामि न मां पश्यति कश्चन ॥ ७१८ ॥

रे रे कोकिल मा भज मौनं किंचिदुदञ्चय पञ्चमरागम् ।
नो चेत् त्वामिह को जानीते काककदम्बकपिहिते चूते ॥ ७१९ ॥

---

712 ISM Kalaṁkar692 V72; Śrṅ309 V45. — BIS. 5777 (2625). **Bhramarāṣṭaka** 8. in Haeb. 241. Kāvyakal. 91. Kāvyasaṁ. 18. Kuvalayānanda **159**; **Śp. 1181**; SRB p. 223. 78; SBH. 754; SKM. **19**. 5; SRH. **35**. 52 (**Śṛṅgāraprakāśa**); SSV. 1096; SKG. f. 14b.

713 Ady XXIX-E-2 N IX-12. — BIS. 5782 (2630). Pañc. ed. Koseg. **III. 268. ed.** Bomb. V. 68. Vikramaca. 80; SRB. p. 94. 108; **SL. f. 40a**; **SN. 810**; **BPB.** 28; SSD. **4**. f. 6a. 714 Meh Ś109. 715 Wai2 extra 4.

716 Nag299 N111; Bik3280 N 124 (25); IO 1854 f. 25a (extra); **HU2145 N51** (38). 717 Wai2 Ś102 ([ab] corrupt). — SRB. p. 288. 19.

718 HU2145 V3. — Cf. BIS. 2784 (1148). Vikramaca. 155.

719 Wai2 extra11; BU N94 (92). — [d]) तूके (for चूते). — SRB. p. 225. 131; SRK. p. 188. 2 (Śp.); ST. **10**. 5; VS. 106; SK. **3**. 108; SU. 1178; **SSD. 2. f. 22a.**

रे रे चञ्चललोचनाञ्चितरुचे चेतः प्रमुच्य स्थिर-
प्रेमाणं बहुमानमेणनयनामालोक्य किं नृत्यसि ।
किं मन्ये विहरिष्यसे बत हतां मुञ्चान्तराशामिमाम्
एषा कण्ठतटे कृता खलु शिला संसारवारांनिधौ ॥ ७२० ॥

रे रे चातक सावधानमनसा मित्र क्षणं श्रूयताम्
अम्भोदा बहवो हि सन्ति गगने सर्वेऽपि नैतादृशाः ।
केचिद् वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद् वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥ ७२१ ॥

रे रे तक्रक मा रोदीः किं किं न भ्रामयत्यसौ ।
कटाक्षक्षेपमात्रेण करलग्ने तु का कथा ॥ ७२२ ॥

रोमन्थमारचय मन्थरमेत्य निद्रां
मुञ्च श्रमं तदनु संचर रे यथेच्छम् ।
दूरे स पामरजनो मुनयः किलैते
निष्कारणं हरिणपोत बिभेषि कस्मात् ॥ ७२३ ॥

लज्जा स्नेहः स्वरमधुरता बुद्धयः सौमनस्यं
प्राणाः स्वाङ्गे पवनसमता दुःखहानिर्विलासः ।
धर्मः शास्त्रं गुरुजननतिः शौचमाचारचिन्ताः
पूर्णा सर्वैर्जठरपिठरे देहिनां संभवन्ति ॥ ७२४ ॥

लज्जे नद्यां निमज्ज क्वचिदपि परतस्त्र तिष्ठ तिष्ठ प्रतिष्ठ
याहि द्रोणीं हिमाद्रेः पुनरपि रसिके भारति स्वस्ति तुभ्यम् ।
सोऽहं पुण्यक्षयेऽद्य प्रचुरपरिभवातङ्कनिर्नष्टशङ्कः
सेवापङ्के पतामि द्रविणकणधियां निष्कृपाणां नृपाणाम् ॥ ७२५ ॥

---

720 ISM Gore144 V188.

721 W N51 (W1 धरणिं for वसुधां in c); Pun2885 N49; NS3 54; — BIS. 5802 (2643) Bhartr. ed. Bohl. extra7. lith. ed. I. 2. 50, II. 51. Ga; SK. SRB. p. 226. 166; SRK. p. 189. 1 (Bh.); ST. 6. 9; VS. 64 (Panditar 3. 52; PT. 10. 45; SSD. 2. f. 26a; SMV. 7. 17. . p. 277. 9

722 Wai2 Ś93. — SRB. p. 260. 11 (var); SBH. 2388; S (Sphuṭaśloka); SM. 1408; SN. 274; SSV 1391. B. p. 233. 106

723 — SU1243 (Bh.); Śp. 949 (Dharmavardhana) (Dharmavardhana); SKM. 26. 5; SRK. p. 180. 9 (Śp.). RI328 V152 (144).

724 D V139; Meh V137; Bik3279 V147 (43) 5827 (2657). Pañc. ed. — b) प्राणोनङ्गः and दुःखहानिर्. — c) सुरगुरुनति. — P Koseg. V. 83. ed. Bomb. 97. Subhāsh. 202; SN. 5 tr. in Schiefner and Weber

725 HU468 V108. — BIS. 5828 (2658) ñc.); JSV. 120. 1. p. 25; SDK. 5. 43. 2 (p. 306); SRH. 102. 21

वक्त्रं पूर्णशशी सुधाधरलता दन्ता मणिश्रेणयः
कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमाः ।
वाणी कामदुघा कटाक्षपटली तत् कालकूटं विषं
रे रे चारुरदे किमर्थममरैरामन्थि दुग्धोदधिः ॥ ७२६ ॥

वनभुवि तनुमात्रत्राणमाज्ञापितं मे सकलभुवनभारः स्थापितो वत्समूर्ध्नि ।
तदिह सुकरतायामावयोस्तर्कितायां मयि पतति गरीयानम्ब ते पक्षपातः ॥७२७

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ ७२८ ॥

वनेऽपि सिंहा मृगमांसभक्षणाद् बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता न नीचसङ्गात् सुखमाद्रियन्ते ॥ ७२९ ॥

वयं दरिद्राः कुशलाश्च च पण्डिता न चापि मूर्खा मणिरत्नमण्डिताः ।
सचक्षुषः शुद्धपटाभिशोभिता नान्यत्र हीनाः कनकैरलंकृताः ॥ ७३० ॥

वयमनिपुणाः कर्णप्रान्ते निवेशयितुं मुखं
कृतकमधुरं भर्तुर्भावं न भावयितुं क्षमाः ।
प्रियमपि वचो मिथ्या वक्तुं जनैर्न च शिक्षिताः
क इह सगुणो येन स्याम क्षितीश्वरवल्लभाः ॥ ७३१ ॥

वयमेव पुरा यूयं यूयमेव पुरा वयम् ।
इदानीमर्थसंबन्धाद् यूयं यूयं वयं वयम् ॥ ७३२ ॥

वरं कार्यं मौनं न च वचनमुक्तं यदनृतं
वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् ।
वरं प्राणत्यागो न च पिशुनवादेऽप्यभिरतिर्
वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥ ७३३ ॥

726 BORI329 Ś100 (101); Pun2101 Ś101 (102); BORI Limaye273 Ś115. — BIS. 5897. Subhāsh 17; SLP. 1. 6.

727 X2 extra7. — Campūrāmāyaṇa II. 25.

728 X2 extra8. — BIS. 5927 (2716). Cāṇa. 99. in Weber. Pañc. ed. Koseg. III. 56. ed. Bomb. 57. Vikramaca. 154. Subhāsh. 228, 273. Carr. 487; Śp. 488; SRB. p. 155. 120; SBH. 2682; SRH. 176. 9 (Bhoja); SRK. p. 223. 15 (Sphuṭaśloka); SL. f. 42a, 46a; SSD. 2. f. 90a; SSV. 405; JSV. 247. 1; SKG. f. 16a. 729 Bar3199 N11. — BIS. 5931. Subhāsh. 66.

730 GVS 2387 V122. — Cf. SRB. p. 40. 36; SBH. 3440.

731 — SKM. 123. 7; SDK. 5. 43. 5 (Bh.); SRH. 124. 17; SHV. f. 73a. 803.

732 C V69; D V69; I V55 (61). C 312. — SMV. 14. 1; SLP. 10. 9.

733 Wai2 N36. — BIS. 5981 (2780). Hit. ed. Schl. I. 129. Jonhs. 144. Padyasaṃgraha 11 in Haeb. and Kāvyas. Kavyakal. 10. Vāmanap. 56, in ŚKDr. sub वरं; SRB. p. 177. 985; SRK. p. 239. 86 (Sphuṭaśloka).

वरं गृध्रो हंसैः सलिलपरितुष्टैः परिवृतो
न हंसः क्रव्यादैः पितृवनविहंगैरकरुणैः ।
परीवारः क्षुद्रो दहति गुणिनं चापि पुरुषं
सहायैरक्षुद्रैर्भवति गुणहीनोऽपि गुणवान् ॥ ७३४ ॥

वरं दरिद्रात् कुशलाश् च पण्डिताः न चापि मूर्खा मणिरत्नमण्डिताः ।
सचक्षुषः शुद्धपटाभिशोभिता नान्यत्र हीनाः कनकैरलंकृताः ॥ ७३५ ॥

वरं मृत्युर्बाल्ये न पुनरधनं जीवितमिदं
वरं वासोऽरण्ये न पुनरविवेके च नृपतौ ।
वरं भिक्षा भोज्यं न पुनरपमाने गृहगतं
वरं वेश्या भार्या न पुनरविनीता कुलवधूः ॥ ७३६ ॥

वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयं पत्रफलाम्बुभोजनम् ।
तृणेषु शय्या वरजीर्णवल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥ ७३७ ॥

वरमहिमुखे क्रोधाध्माते करो विनिवेशितो
विषमपि वरं पीत्वा सुप्तं कृतान्तनिवेशने ।
गिरिवरतटान् मुक्तश् चात्मा वरं शतधा कृतो
न तु खलजनावाप्तैरर्थैः कृतं हितमात्मनः ॥ ७३८ ॥

वाचो हि सत्यं परमं विभूषणं कुलाङ्गनानां तपसः कृशत्वम् ।
द्विजस्य विद्यैव पुनस् तथा क्षमा शीलं हि सर्वस्य नरस्य भूषणम् ॥ ७३९ ॥

वासो बहूनां कलहो भवेद् वार्ता द्वयोरपि ।
एक एव चरेत् तस्मात् कुमार्या इव कङ्कणः ॥ ७४० ॥

734 Tan10236 N99.

735 GVS2387 V122. — Cf. SRB. p. 40. 36; cf. SBH. 3440

736 D V134 (*adbc*). — [a]) वरं बाल्यभ्रष्टं न पुनरधनं यौवनमिदं — [b]) पुनरविवेकाधिकपुरे. — [c]) वरं प्राणत्यागो न पुनरगुणारामममधुना — [d]) पत्नी (for भार्या); HU2145 N22 (15); Bik3279 V142 (38); BORI328 V146 (138). — SRK. p. 237. 71 (Sphuṭaśloka).

737 Ujj6414 V105 (106); HU468 V109; Bik3277 N extra4; NS1 Ś3 (N extra); SVP 159 no. not noted. — BIS. 5049 (2727). Nītiratna15 in Haeb. 13 in Kāvyakal. 14 in Kāvyasa. Bhartṛ. in Schiefner and Weber. p. 25. Vṛddhacāṇ. 10 12. Pañc. ed. Koseg. V. 21. cd. Bomb. 23. Hit. ed. Schl. I. 144. Johns. 160. Subhāsh. 164; SRB. p. 66. 46; SSD. f. 139a; SMV. 7. 14.

738 — BIS. 5969 (2741) Bhartṛ. Śp. 255; SRB. p. 80. 38 (Bh.); SBH. 456; SRK. p. 47. 3 (ST.); Tantrākhyāyikā II. 68, Edgerton II. 41, SSD. 2. f. 138b.

739 C N46; BORI329 N49; Ujj6414 N49; GVS2387 N51; PU496 N104 (103). — SRB. p. 84. 15 (cf. जवो हि). 740 ISM Kalamkar195 V108 (111).

विकीर्णहरिचन्दनद्रविणि यत्र लीलालसा
निपेतुरलिचञ्चलाश् चतुरकामिनीदृष्टयः ।
तदेतदुपरि भ्रमन् निबिडगृध्रजालं जडैर्
लुठत्कृमिकलेवरं विहितनासिकैर्वीक्ष्यते ॥ ७४१ ॥

विद्या काचित् स्फुरति महती भास्वती चेतसोऽन्तर्
यन्माहात्म्यात् तृणवदियती मन्यतेऽपि त्रिलोकीम् ।
किं तेषां सा चणककणिकालेशमात्रे स्पृहासौ
या दैन्यस्य प्रथयति व[भ?]यं राजराजे मुहूर्तम् ॥ ७४२ ॥

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूजितो राजा विद्वान् सर्वत्र पूज्यते ॥ ७४३ ॥

विद्वांसः शतसंख्यशास्त्रपठनव्यापारशुद्धाशयाः
सन्त्येके मुनयोऽपि दुस्तरतपोनिर्दग्धकर्मेन्धनाः ।
ध्यानध्येयलवेन योगनिपुणास् तिष्ठन्ति ते योगिनो
दृश्यन्तेऽमलनिर्विकारमहसानन्दैकभाजो भुवि ॥ ७४४ ॥

विद्वांसो वसुधातले परगुणश्लाघासु वाचंयमा
भूपालाः कमलाविलासमदिरामीलन्मदाघूर्णिताः ।
आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाधरमाधुरीमधरयन् वाचां प्रचारो मम ॥ ७४५ ॥

विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ ७४६ ॥

विधिरेव विशेषगर्हणीयः करट त्वं रट किं तवापराधः ।
सहकारतरौ चकार योऽसौ सहवासं सरलेन कोकिलेन ॥ ७४७ ॥

---

741 D and Meh V135; BORI328 V147 (139); Bik3279 V143 (39). — Śp. 4078 (Indrakavi); SRB. p 396. 2 (Indra); SKM. 94. 10.

742 BORI329 V95; Pun2101 V95; Pun697 V117; Bik3278 and 3281 V123.

743 IO K7207 N II-10. — BIS. 6109 (2804). Caṇa. 3 in Haeb. 312. Saṁskṛtapaṭhop. p. 53. in Hoofer p. 72. in Galan. 9. Vṛddhacāṇ. Berlin MS. 46. Pañc. ed. Koseg. II. 56. 129. ed. Bomb. 51. Prasaṅgābh. 5. Subhāsh. 8; SRB. p. 38. 7; SBH. 3426; SRII. 28. 1 (Mbh?); SRK. 32. 6 (Hitopadeśa); SN. 690.

744 ISM Gore144 V192; GVS2387 V70. — [a]) °रसहसा°.

745 BU V1. — SHV. f. 40a. 233 (Paṇḍitarāja Jagannātha). — [a]) °वच:° (for °गुण°). — [b]) °मदिरोन्मील°. — [c]) कामालस-. — [d]) विलासो (for प्रचारो); SK. 2. 23.

746 IO K7207 N II-11. — BIS. 6114 (2806). Kuvalayānada 65. Nītiśāstra in Telugu char. 106. Carr. 462; SRB. p. 38. 5; SRII. 28. 8 (Nītiśāstra); SRK. p. 32. 3 (Kuvalayananda); PT. 3. 9; SSD. 2. f. 102a.

747 X extra2. — BIS. 6124 (2813). Kuvalayānanda 112a (91a); SRB. p. 228. 209; SRK. p. 194. 7 (Kuvalayānanda).

विधूतकेशाः परिलोलितस्रजः सुराङ्गनानां प्रविलुप्तचन्दनाः ।
अतिप्रसङ्गाद् विहितागसो मुहुः प्रकम्पमीयुः सभया इवोर्मयः ॥ ७४८ ॥

विरुद्धस् तथ्यो वा भवतु वितथो वा यदि परं
प्रसिद्धः सर्वस्मिन् हरति महिमानं जनरवः ।
तुलोत्कीर्णस्यापि प्रकटनिहताशेषतमसो
रवेस् तादृक्तेजो न हि भवति कन्यां गत इति ॥ ७४९ ॥

विश्वासायतनं वि * * दलनं देवैः कृताराधनं
मुक्तेः पथ्यदनं जलाग्निशमनं व्याघ्रोरगस्तम्भनम् ।
* यः संवननं समृद्धिजननं सौजन्यसंजीवनं
कीर्तेः केलिवनं प्रभावभवनं सत्यं वचः पावनम् ॥ ७५० ॥

विषस्य विषयाणां च दूरमत्यन्तमन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ ७५१ ॥

वीतरागभयक्रोधो मुक्तः सर्वमदैरिह ।
कदा शंभो भविष्यामि कर्मनिर्मूलनक्षमः ॥ ७५२ ॥

वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः
पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं मन्त्रिणः
सर्वः कार्यवशंगतोऽभिरमते कस्यास्ति को वल्लभः ॥ ७५३ ॥

वृथाग्रे दशनो मुग्धे दष्टे वाधरपल्लवे ।
खण्डित * * * * * * * * * पयोधरा ॥ ७५४ ॥

व्यङ्गं शरीरं सुभगं भटानां कपोलपाली मलिना गजानाम् ।
कुचेलता प्रोषितभर्तृकाणां दानाद् दरिद्रः सुभगत्वमेति ॥ ७५५ ॥

748 — SRB. p. 338. 78 (Bh.).

749 A N50. — c) A1 (t by corr). 2 प्रगटनिहता°.

750 HU2145 N44 (33).

751 BORI326 Ś100; Ujj6414 Ś104; GVS2387 Ś extra1; Lim885/1 Ś101; Lim1485 V extra3. — BIS. 6225 Subhāsh. 75; SRB. p. 158. 231 (Candragopin); SBH. 3368 (Candragopin); SRH. 196. 3 (Vyāsaśataka); SS. 45. 29; SK. 6. 245; SMV. 23. 20; JSV. 237. 3.

752 ISM Kaḷamkar692 V55.

753 ISM Kaḷamkar195 V126. — BIS. 6246 (2883). Saptaratna4. Vānaryaṣṭaka 8. in Haeb. Kāvyakal. and Kāvyas. Nītisaṁk. 40. Pañc. ed. Koseg. II. 102; Śp. 1543; Subhāsh. 156; SRB. p. 178. 1013. 754 F4 S109.

755 GVS2387 N8; Bik3282 and Bar5199 N7. — d) in marg, orig. न निन्द्यतामेत्यविभूषणत्वम् ॥; Lim1485 extra f. 1b.

व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेन्द्रस्य का
कुब्जायाः किमु नाम रूपमधिकं किं तत् सुधाम्नो धनम् ।
वंशः को विदुरस्य यादवपतेरुग्रस्य किं पौरुषं
भक्त्या तुष्यति केवलं नवगुणैर्भक्तप्रियो माधवः ॥ ७५६ ॥

व्यालुम्पन्ति समाधिमाधिविधुरं चैता मनः कुर्वते
लोभाभावविशेषभूरिविरहे संप्राप्य चेतो यतः ।
एतासां न वयं न चम्पकरुचिष्वङ्गेष्वनङ्गीकृतं
प्रामाण्यो हरिणीदृशां तव दृशोरन्तः स्थिता ब्रह्मणि ॥ ७५७ ॥

व्योम्न्येकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्ति क्षितिं
बध्यन्ते निपुणैरगाधसलिलान् मीनाः समुद्रादपि ।
[दुर्नीतं किमिहास्ति किं सुचरितं] कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ ७५८ ॥

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसंग्रहैश् च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ७५९ ॥

शतं वा लक्षं वा नियुतमथ वा कोटिमथ वा
तृणायाहं मन्ये समयविपरीतं यदि भवेत् ।
शतं तल् लक्षं तन् नियुतमपि तत् कोटिरपि तद्
यदाप्तं सन्मानादपि तृणमनम्रेण शिरसा ॥ ७६० ॥

शरीरं सुरूपं तथा वा कलत्रं धनं मेरुतुल्यं वचश् चारु चित्रम् ।
हरेरङ्घ्रियुग्मे मनश् चेन्न लग्नं ततः किं ततः किं ततः किं ततः किम् ॥७६१॥

---

756 PU496 Ś101 (102). 757 Bik3278 and 3281 V133.

758 Ady XXIX-E-2 N IX-16. — Lacuna in c from BIS. 6336 (2922). Aṣṭaratna2. Nītipradīpa5. in Haeb. Kāvyakal and Kāvyas. Pañc. ed. Koseg. II. 21. ed. Bomb. 20. Hit. ed. Schl. I. 46. Johns. 53; SRB. p. 374. 203; SDK. 5. 72. 2 (p. 325, Vasubhāga); SRK. p. 100. 1 (Hit.); SSD. 4. f. 5b.

759 W N11; Y6 T1 (but om. in ASP1035 and other ASP MSS of T1). N10 [Also HU1387 N4; Pun2885 and Ady XXV-L-2. N11; NS3 N105 (extra)]. — a) W4 Y6 T1 भुक्छूर्पेण. — b) W4 T1A गौर्गार्दभः; Y6 T1B गौर्गर्दभः. — c) W1t.4 Y6 T1 मंत्रैः (for मन्त्र-). — BIS. 6348 (2929) Bhartr. ed. Bohl. extra1. lith. ed. I. 2. 10, II. 11. Galan6. Pañcaratna5 (Haeb. p. 4). Kāvyakal. and Kāvyas. Carr. 446. Subhāsh. 282; SRB. p. 41. 68; SBH. 2943; SRK. p. 35. 8 (Bh.); Sūktāvali 17; SA. 27. 81 (61); cf. SRH. 54. 16; VS. 883 (Bh.); SS. 15. 2; SSD. 2. f. 132a; SSV. 761; JSV. 209. 4. 760 — SDK. 5. 40. 3 (p. 304, Bh.).

761 Meh V160 (final). [Śaṃkarācārya. ?]

शान्ते मन्मथसंगरे रणभृतां सत्कारमातन्वती
वासोऽदाज् जघनस्य पीनकुचयोर्हारं श्रुतेः कुण्डलम् ।
बिम्बोष्ठस्य च वीटिकां सुनयना पाणौ रणत्कङ्कणं
पश्चाल् लम्बिनि केशपाशनिचये बन्धो हि युक्तक्रमः ॥ ७६२ ॥

शास्त्रं नाधिगतं व्रतं न चरितं दानं न दत्तं मया
गङ्गातीरतरङ्गनिर्मलजलैः स्नात्वा हरो नार्चितः ।
तन्वङ्गी नवयौवनस्तनतटी नालिङ्गिता कामिनी
इत्थं जन्म निरर्थकं गतमहोऽरण्ये यथा मालती ॥ ७६३ ॥

शिकतासु तैलं सुकृतं [कृ]तघ्ने शीतं हुताशे स्नपनं च [तीर्थे] ।
उत्पद्यते कालवशात् कदाचिद् वे[श्या] सुरापो न भवेत् कदाचित् ॥ ७६४ ॥

शिखिनि कूजति गर्जति तोयदे स्फुरति जातिलताकुसुमाकरे ।
अह ह पान्थ न जीवति सा प्रिया नभसि मासि न यासि गृहं यदि ॥ ७६५ ॥

शिशिरे निशासु वाते वाते शीतयति कुन्दगन्धयते ।
कान्ताकुचान्तराले शीते लोके तु भाग्यवान् पुरुषः ॥ ७६६ ॥

शीतार्ता इव संकुचन्ति दिवसा नैवाम्बरं शर्वरी
शीघ्रं मुञ्चति तावदेव हुतभुक् कोणं गतो भास्करः ।
[illegible]हुताशभाजि हृदये त्वत्प्रेयसीभिर्भवान्
आस्ते किं करवाम धामरहिता शीतातिभीता वयम् ॥ ७६७ ॥

श्रुतिस्मृतिपुराणानां यदेकं वाच्यमव्ययम् ।
तस्मै विश्वेशमूलाय नमो मुग्धेन्दुमौलये ॥ ७६८ ॥

---

762 Wai2 extra3. — Śp. 3703; SRB. p. 321. 24; SBH. 2134; SK. 5. 140; SU. 705; SMV. 18. 12; SLP. 1. 15.

763 BORI Limaye273 Ś19 (20); BU73/29 N58. — [a]) वेदा नाभ्यसिता (for शास्त्रं नाधिगतं). — [b]) गंगातोय°. — [c]) श्यामाङ्गीवरकुङ्कुमस्तनतटी. — [d]) एवं (for इत्थं) and क्षितितले (for गतमहो); Ujj6414 V54 (56) and Pun2127 V85 (corrupt). — [a]) योगो नाभ्यसितो. — [b]) गंगाफेनशशांकनिर्मलजले. — [c]) श्यामांगीवरकुंकुमेन रचिता भुक्ता न पीनस्तनी (°कुंकुमार्चिततनुर् in Pun2127); HU2145 V88 (84) शस्त्रं°.

764 HU2145 N122 (104).

765 D Ś62. — [b]) °कुसुमाकुले; F1 Ś61. — [b]) स्फुटति. — [c]) ते (for सा); F2 Ś61. — [a]) नृत्यति (for कूजति). — [c]) ते (for सा); F4 Ś68. — [b]) स्फुटति and °कुसुमाकुले; Ś62 in R. P. Dewhurst J. U. P. Hist. Soc. I. — SRB. p. 342. 84; SLP. 10. 16. 766 Mys KB 340 and Telugu printed ed. (1840 ?) Ś100 (final).

767 Śrn309 Ś100. 768 IO K7207 and Mys 1642 Ś1.

संकल्पमात्रमेवेदं जगन् मिथ्यासमुत्थितम् ।
असंकल्पनमात्रेण ब्रह्मन् क्वापि विलीयते ॥ ७६९ ॥

संगमविरहविवर्के वरमिह विरहो न संगमस् तस्याः ।
संगम एका भवती विरहे जगन्ति त्वन्मयानि स्युः ॥ ७७० ॥

संगीतभारतकथा गन्धताम्बूलचर्वणम् ।
सुस्त्रीसमागमे तानि सदा सर्वसुखानि च ॥ ७७१ ॥

संदष्टेऽधरपल्लवे सचकितं हस्ताग्रमाधुन्वती
मा मा मुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।
सीत्काराञ्चितलोचना सरभसं यैश् चुम्बिता मानिनी
प्राप्तं तैरमृतं श्रमाय मथितो मूढैः सुरैः सागरः ॥ ७७२ ॥

संपदो जलतरङ्गविलोला यौवनं त्रिचतुराणि दिनानि ।
शारदाभ्रमिव चञ्चलमायुः किं धनैः परहितानि कुरुध्वम् ॥ ७७३ ॥

स कोऽपि स्मर्यतां मन्त्रः स देवो वाप्युपास्यताम् ।
येन न स्त्रीपिशाचीयं ग्रसते शीतजीवितम् ॥ ७७४ ॥

सतां हृदि विनोदाय ज्ञानवार्तां विचिन्वताम् ।
परोपकरणे यत्नः साधूनां भवति ध्रुवः ॥ ७७५ ॥

सत्यं मनोहरा रामाः सत्यं रम्या विभूतयः ।
किंतु मत्ताङ्गनापाङ्गभङ्गिलोलं हि जीवितम् ॥ ७७६ ॥

---

769 ISM Gore144 V178.

770 H Ś77; NS3 Ś79 (80). — BIS. 6671 (3101) Sāhityadarpaṇa 285. ed. Calc. (1828) p. 303. Vet in LA (III) 21; SRB. p. 277–8. 19; SDK. 2. 91. 4 (p. 128, Dharmakīrti); SS. 43. 4; SK. 5. 13; SU. 564; SMV. 14. 12; SLP. 9. 34.

771 NS3 N101 (102). — [a]) सङ्गीत; Āna624 Ś102. — [a]) सङ्गीत; Kavi Bāla's trans. संगीत.

772 BORI329 Ś99 (100); Pun2101 Ś100 (101). — BIS. 6807 (3160) Amaruśataka 32 (NSP ed. 36): Subhāsh. 18; Śp. 3668 (Amaruka); SRB. p. 317. 5; SBH. 1303; SKM. 78. 10 (Amaruka); SDK. 2. 126. 5 (p. 150, Amaru); 127. 5 (p. 151, Yuvatisaṁbhogakāra); AMD. 107; SS. 56. 24; SL. f. 3a; BPS. f. 11b. 62.

773 D V140; BORI328 V158 (149), Bik3280 V152 (48). — SBH. 3316; SS. 23. 9; SSV. 242.

774 D V151; BORI328 V168 (59); Bik3279 V152 (48); Āna (Apte fragment) V153 (final) — SS. 44. 11. 775 ISM Gore144 V185.

776 — BIS. 6733. Subhāsh. 79; RKB. f. 39a (Bh.); SRB. p. 372. 180; SBH. 3266; AMD. 483; SRH. 197. 30; JSV. 266. 13; Aucityavicāracarcā of Kṣemendra (KM. 1 p. 132, Vyāsa).

सत्यां क्षितौ किं कशिपोः प्रयासैर् बाहौ स्वसिद्धे ह्युपबर्हणैः किम् ।
सत्यञ्जलौ किं पुरुधान्नपात्र्या दिग्वल्कलादौ सति किं दुकूलैः ॥ ७७७ ॥
सदनमुपगतोऽहं पूर्वमम्भोजयोनेः सपदि मुनिभिरुच्चैरासनेषूज्झितेषु ।
सशपथमनुनीय ब्रह्मणा गोमयाम्भःपरिमृजितनिजोरावाशु संवेशितोऽस्मि ॥ ७७८
सन्त्येवात्र वने वनेऽपि बहवो निम्बाः क्वचिच् चन्दनः
क्रोशन्ते प्रतिदिक्षु केवलमिमे काका वसन्ते कुहूः ।
पाषाणैः परिपूरिता वसुमती जात्यो मणिर्दुर्लभस्
तन्मन्ये खलसंकुलं जगदिदं कुत्रापि ते सज्जनाः ॥ ७७९ ॥
समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् ।
शरदि हंसरवाः परुषीकृतस्वरमयूरमयूरमणीयताम् ॥ ७८० ॥
समारम्भा भग्नाः कति न कति वारांस् तव पशो
पिपासोस् तुच्छेऽस्मिन् द्रविणमृगतृष्णार्णवजले ।
तथापि प्रत्याशा विरमति न तेऽद्यापि शतधा
न दीर्णं यच् चेतो नियतमशनिग्रावघटितम् ॥ ७८१ ॥
समाश्लिष्यत्युच्चैर्जघनपिशितपिण्डं स्तनधिया
मुखं लालाक्लिन्नं पिबति चषकं सासवमिव ।
अमेध्यक्ल[ क्ले ]दार्द्रे पथि च रमते स्पर्शरसिको
महामोहान्धानां किमिव रमणीयं न भवति ॥ ७८२ ॥
सरसा सुपदन्यासा सालंकारा सुवर्णमयमूर्तिः ।
आर्या तथा च भार्या न लभ्यते पुण्यहीनेन ॥ ७८३ ॥
सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः ।
सर्पो दशति कालेन दुर्जनस् तु पदे पदे ॥ ७८४ ॥

---

777 ISM Kalamkar195 V86 (89). — BIS. 6738 (3131) Bhāg. P. 2. 2. 4.

778 ISM Kalamkar195 V88 (91). — SRH. 12. 6 (Prabodhacandrodaya). Prabodhacandrodaya 2. 10.

779 X N70. — BIS. 2928. Subhash. 12; SSD. 2. f. 92a (var.).

780 BVB2 extra marg. f. 1b. — SRB. p. 344. 32 (Māgha).

781 H V65. — BIS. 6850 (5173) Prab. 76 [4. 20]; SRB. p. 77. 46; SRK. p. 295. 11 (BIS).

782 BIS. 6854 (3179). Śāntiś. Haeb. 1. 29. Kāvyakal. and Nītis. Śatakāv 26; SRB. p. 372. 134; SBH. 3388; SRK. p. 295. 14 (BIS.); SU 1030 (Bh.).

783 E4 V120 (19) extra; BOR1333 V119 extra; RASB. 7747 V119; Pun2101 V108 extra. — SRB. p. 30. 17; SRK. p. 42. 12 (Prasaṅgaratnāvalī).

784 BORI329 N31 (30). — BIS. 6900 (4196). Subhāsh. 86; SRB. p. 54. 30; Cāṇakyanītidarpaṇa. 3. 4; SK. 2. 123; SMV. 10. 6.

सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः ।
मन्त्रौषधिवशात् [? शः] सर्पः खलः केनोपशाम्यते ॥ ७८५ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास् ते
शुष्कैस् तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं
संतोष एव पुरुषस्य परं निदानम् ॥ ७८६ ॥

सर्वः प्रेप्सति यत्सुखाप्तिमतिता सा सर्वकर्मक्षयात्
सद्वृत्तात् स च तच् च बोधनियतं सोऽप्यागमात् स श्रुते ।
सावाप्तात् [?] स च सर्वदोषरहितो रोगादयस् ते व्यथस्
तद्युक्त्या सुविचार्य सर्वसुखदं सन्तः श्रयन्तु श्रियैः ॥ ७८७ ॥

सर्वशक्तिमयो ह्यात्मा यद् यथा भावयत्यलम् ।
तत् तथा पश्यति तदा स संकल्पविजृम्भितम् ॥ ७८८ ॥

सर्वे लतान्तास् तरुमाश्रयन्ति सर्वे नद्यः ते सागरमाश्रयन्ति ।
सर्वे तरुण्यां पतिमाश्रयन्ति सर्वे जनाः काञ्चनमाश्रयन्ति ॥ ७८९ ॥

सर्वे वयमिह स्वप्नपुरुषास् तव सुव्रत ।
अस्माकं त्वं * * * * सर्वे स्वप्ननरा वयम् ॥ ७९० ॥

सहवर्धितयोर्नास्ति संबन्धः प्राणकाययोः ।
पुत्रमित्रकलत्रेषु संबन्धित्वकथैव का ॥ ७९१ ॥

साधुरेवार्थिभिर्याच्यः क्षीणवित्तोऽपि सर्वदा ।
शुष्कोऽपि हि नदीमार्गः खन्यते सलिलार्थिभिः ॥ ७९२ ॥

सानन्दं सदनं सुताश् च सुधियः कान्ता न दुर्भाषिणी
सन्मित्रं सधनं स्वयोषिति रतिश् चाज्ञापराः सेवकाः ।

---

785 X N44 (X2 °वशी सर्पः in [c]); Y1 N45. — BIS. 6899 (3197) Cāṇa. 26. in Haeb. 75 in Weber. Vṛddhacāṇa. Berlin Ms. 232. Prasaṅgābh. 10. Galan. (varr.) 89; SRB. p. 54. 33; SRK. p. 32. 10 (Sp.), SA. 27. 27; ST. 3. 31; SK. 2. 124; PT. 9. 87, SSD. 2 f. 149o, SMV. 10. 8.

786 PU496 N107 (106). — BIS. 6903 (3199) Pañc, ed. Koseg. 2. 161. Subhāsh. 208; Sp. 318, SRB. p. 75. 11; SRK. p. 54. 11 (Sphutaśloka).

787 BORI328 V171 (162) corrupt, Bik3279 V165 (61).

788 ISM Gore144 V177. 789 IO K7207 N32.

790 ISM Gore144 V173. 791 IO 1151b V104 (per H. N. Randle).

792 — BIS. 6988 (3233) Bhartr. in Śp. Schiefner and Weber p. 6. Galan 2. 36; Śp. 399; SRB. p. 73. 4; SRK. p. 60. 14 (Prasaṅgaratnāvalī); SL. f. 52a; SSV. 1264.

793 Ujj711 V51. — [ab]) सौन्दर्यं सदनं सुतस्तु दुहिता कान्ता मृदुभाषिणी स्वेच्छापूर्णधनं etc. — [d]) मङ्गमुपागमं प्रतिदिनं ।; NS3 V42. — [a]) कान्ता मृदूभाषिणी. — [b]) as in

आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ ७९३ ॥

सारं सारङ्गरङ्गत्तरुणतृणशिखा खण्डवायेन खेदं
क्षोभं नीत्वा सलीलं सलिलमनुपिबेर्योषिता पीतशेषम्।
धन्यस् त्वं यद् वनान्ते गमयसि समयं दारुणद्रव्यगर्व-
प्रध्मातोद्ग्रीवगृध्नु प्रहिलखलखरक्ष्मायवक्त्राण्यपश्यन् ॥ ७९४ ॥

सा हानिस् तन् महच् छिद्रं सा चान्धजडमूकता।
यन् मुहूर्तं क्षणं वापि वासुदेवं न चिन्तयेत् ॥ ७९५ ॥

साहित्यसंगीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः।
तृणं न खादन्नपि जीवमानस् तद् भागधेयं परमं पशूनाम् ॥ ७९६ ॥

सिंहो बली द्विरदशूकरमांसभोजी संवत्सरेण रतिमेति किलैकवारम्।
पारावतः खरशिलाकणमात्रभोजी कामी भवत्यनुदिनं वद कोऽत्र हेतुः ॥७९७॥

सीत्कारं कारयति व्रणयत्यधरं तनोति रोमाञ्चम्।
नागरिकः किं मिलितो न हि न हि सखि हैमनः पवनः ॥ ॥ ७९८ ॥

सुगन्धं वनिता वस्त्रं गानं ताम्बूलभोजनम्।
शय्या च भूषणं चैव अष्टौ भोगाः प्रकीर्तिताः ॥ ७९९ ॥

सुजनं कुजनं मन्ये महान् वंशसमुद्भवः।
स्वपरिभ्रमणेनैव परतापं व्यपोहति ॥ ८०० ॥

---

Ujj711. — [d]) साधूसंगतिनित्यमेव च गृहे. — BIS. 6998 (5224). Vṛddhacāṇa. 12. 1; SRB. p. 89. 4; SRK. p. 95. 1 (Bh.).

794 D V128; F1.2 V105; BORI328 V130; HU271 V128; SVP 159 V extra12. — [b]) क्षौधं पीत्वा. — [c]) दारुणे रूपगर्व; GVS2387 V113. — [b]) क्रोधं (for क्षोभं). — [d]) खरखलक्ष्माण्यवक्राण्यपश्यन्।; Pun2127 V129. — [a]) °खंडग्वाद्यैर्द्रुमाणां; Meh V129; Bik3279 V134 (30); Bik3278 V126; Bik3281 V125 (126).

795 ISM Kalamkar692 V68.

796 W and Pun2885 N12; NS3 N106. — BIS. 7037 (3250) Bhartṛ. ed. Bohl. extra2. lith. ed. I. 2. 11, II. 12. Galan 13; SRB. p. 40. 30; SRK. p. 35. 9 (Bh.); SK. 2. 8; SSD. 2. f. 172b.

797 H1 V107; Ujj6414 V106. — [b]) °ण कुरुते रतिमेकवारं. — [c]) °कणभोजनोऽपि. — BIS. 7044. Subhāsh. 76; Prabandhacintāmaṇi 4. 183 (p. 205. 1888 ed.); SHV. App. I f. 2a. 26; SS. 45. 4.

798 F4 Ś106. — Śp. 524 (Dharmadasa); SRB. p. 186. 3; SRK. p. 149. 4 (Kuvalayānanda); com. on Kuvalayānanda 30. 799 Bik3295 Ś113.

800 X N58; ASP1461 extra2. — BIS. 7091 (5257). Prasaṅgābh. 3; SRB. p. 45. 18; SRK. p. 12. 6. (Śp.); ST. 1. 28; SL. f. 56a; SSD. 2. f. 95a. All anthologies व्यजनं (for कुजनं); orig. कूजनं?

सुजनो न याति वैरं परहितबुद्धिर्विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ ८०१ ॥
सुतारा विक्रीता स्वजनविरहः पुत्रमरणं
विनीतायास् त्यागो रिपुबहुलदेशे च गमनम् ।
हरिश्चन्द्रो राजा वहति शलिलं प्रेतसदने
ह्यवस्था तस्यैषाप्यहह विषमाः कर्मगतयः ॥ ८०२ ॥
सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन ।
अनङ्गसंजीवनदृष्टिशक्तिर्मुखाम्बुजं ते पिबतीति चन्द्रः ॥ ८०३ ॥
सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति त्रयो जनाः ।
शूरश् च कृतविद्यश् च यस् तु जानाति सेवितुम् ॥ ८०४ ॥
सुवृत्तस्यैकरूपस्य परप्रीत्यै धृतोन्नतेः ।
साधोः स्तनयुगस्येव पतनं कस्य तुष्टये ॥ ८०५ ॥
सुहास्यमुखपङ्कजे नयनचञ्चलालोचने
वदे मधुरभाषणे अतिविलासकामाङ्गने ।
गजेन्द्रगतिसंभ्रमे पदसरोरुहे कोमले
न होति न च यौवनीकषणभावरम्यस्थले ॥ ८०६ ॥
सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः
स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः ।
आकारो रुचिरः स्थिरश् च विभवो विद्यावदातं मुखं
तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिनाम् ॥ ८०७ ॥

---

801 ISM Gore144 V189. — BIS. 7099 (5258) Bohl. on Bhartr. 2. 62. Subhāsh. 274; Śp. 237 (Ravigupta); SRB. p. 47. 110 (Ravigupta); SBH. 241 (Ravigupta); SKM. 6. 12 (Ravigupta); SDK; 5. 35. 3 (p. 301, Śrīvyāsapāda); SRH. 31. 21; SRK. p. 10. 4 (Sphutaśloka); SS. 26. 28; SK. 2. 76; PT. 1. 43; SG. f. 10b; SL. f. 25b; SSD. 2. f. 97b; SSV. 464; SMV. 9. 11; SKG. f. 17b.

802 A N37. — SK. 6. 438; SMV. 8. 10.

803 E Ś36. — [d]) मुखामृतं. NS1 Ś40. — Śp. 3305 (Vaidyanātha); SRB. p. 260. 120; SRK. p. 277. 2 (Śp.); SHV. app. II f. 5a. 46; SU. 265 (Vaidyanātha); SK. 3. 23, 5. 125.

804 GVS734 N95. — BIS. 7133 (3284) Mbh. 5. 1255-6. ( = (var.) BORI. crit. ed. 5. 35. 64). Pañc. ed. Koseg. I. 51. ed. Orn. 31. ed. Bomb. 45. Kuvalayānanda 60; SRB. p. 148. 254; SRH. 181. 17 (Mbh.); PT. 9. 2.

*805 C N37. — BIS. 7134. Subhāsh. 273;* SRB. p. 46. 75; SBH. 219 (Kṣemendra); SRH. 31. 8 (Bh.); SSV. 407.

*806 Ana624 Ś29, [a] only in text, rest Marāṭhī trans. Kavi Bāla.*

*807 W and Pun2885 N25;* NS3 N110. — BIS. 7160 (3288) Bhartr. ed. Bohl. extra4. lith. ed. I. 2. 24, II. and Galan. 25; SRB. p. 179. 1020. SHV. app. I. f. 1b. 40; SMV. 25. 7.

स्तनशैलसंनिधाने त्रिवलिनदीतीरकोटरे तत्र ।
जगदपि नग्नीविहितं तथापि पञ्चेपुचौरेण ॥ ८०८ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ ८०९ ॥
स्थगयति तमः शशाङ्कं चलति गिरिः पतति तारकाजालम् ।
कथयन्त्यमूनि मन्ये काञ्चीपदसीम्नि किमपि संक्षोभम् ॥ ८१० ॥
स्वगृहे पूजितो मूर्खः स्वग्रामे पूजितः प्रभुः ।
स्वदेशे पूजितो राजा विद्वान् सर्वत्र पूजितः ॥ ८११ ॥
स्वचित्तपरचिन्तयैव परितापमात्मन्यमी
न बिभ्रति मनस्विनो यदमुना न तावत् क्षतिः ।
अहर्निशमिहैव ये परमनोनुवृत्त्या पुनर्
वहन्ति विजिगीषुतां क्रिमिव तेऽनुकम्पास्पदम् ॥ ८१२ ॥
स्वदत्ता पुत्रिका धात्री अन्यदत्ता सहोदरी ।
* * * ॥ ८१३ ॥
स्वयं गुणपरित्यागा[illegible]नाभः पतत्यधः ।
तमेव [illegible]न् भूयः पदमुच्चैर्विगाहते ॥ ८१४ ॥
स्वयं हि पच्यते पाकं प्रती[illegible] यदि सेव्यते ।
पुत्रो हि पच्यते पाके स्वयंपाकः स उच्यते ॥ ८१५ ॥
स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति ।
संपूर्णेऽपि तडागे काकः कुम्भोदकं पिबति ॥ ८१६ ॥
हंहो पान्थ किमाकुलः श्रमवशादत्युत्सुकं धावसि
प्रायेणास्य महाद्रुमस्य भवता वार्तापि नाकर्णिता ।
मूलं सिंहसमाकुलं गिरिवरे प्रोत्तुण्डतुण्डाः खगा
मध्ये कोटरभाजिभीषणफणाः फूत्कुर्वते पन्नगाः ॥ ८१७ ॥

---

808 E4 V119 (18); RASB 7747 V118, Pun2101 V extra 5 = V107.

809 ISM Kalamkar846 Ś98; ISM Kalamkar195 S98 (99); Bik3275 Ś112. — [a]) स्वेदः स्तंभोप्य. — [d]) सात्त्विका गुणाः. 810 M4.5 S II-7. — SRB. p. 320 6.

811 IO K7207 N II-12. — BIS- 7267. Carr. 485. Nītiśāstra in Telugu char. 88; SRH. 181. 39. 812 — SRB. p. 70. 39; SBH. 531 (Bh.).

813 ASP1461 extra5.

814 — BIS. 7307 (5358) Bharti. in Sp. Guṇapraśaṃsa in only one Ms., not in pr. ed. 815 HU2145 N8 (3).

816 BU114/7 Ś104. — SRB. p. 170. 751; SSV. 1338.

817 Jod3 N108.

हत्वा नृपं पतिमवेक्ष्य भुजंगदष्टं देशान्तरे विधिवशाद् गणिकास्मि जाता ।
पुत्रं भुजंगमधिगम्य चितां प्रविष्टा शोचामि गोपगृहिणी कथमद्य तक्रम् ॥ ८१८

हरिद्रा गोरसं चूर्णं धान्यं कार्ष्णायसौषधम् ।
नैतेषां पाकदोषोऽस्ति तैलं लवणमैक्षवम् ॥ ८१९ ॥

हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः ।
हेमाद्रिकलसा यत्र धात्री छत्रश्रियं दधौ ॥ ८२० ॥

हासोऽस्थिसंदर्शनमक्षियुग्ममत्युज्ज्वलं तत् कलुषावसायाः ।
स्तनौ च पीनौ पिशितास्रपिण्डौ स्थानान्तरे किं नरकेन योषित् ॥ ८२१

हे कोकिल कुरु मौनं जलधरसमये हि पङ्किला भूमिः ।
विकसति कुटजकदम्बे वक्तरि भेके क्व तेऽवसरः ॥ ८२२ ॥

हेमाम्भोरुहपत्तने परिमलस्तेयी वसन्तानिलस्
तत्रत्यैरिव यामिकैर्मधुकरैः प्रारब्धकोलाहलः ।
निर्यातस् त्वरितो व्रजन् निपतितः श्रीखण्डपङ्कद्रवैर्
लिप्तः केरलकामिनीकुचतटात् खञ्जः शनैर्गच्छति ॥ ८२३ ॥

[ SUPPLEMENT ]

अग्रे डुम्बः करधृतडफः पार्श्वतो भण्डमाला
पृष्ठे वेश्या विलसतितरां कर्तरी धर्मतन्त्वो ।
इत्थं राजा प्रभवति यदा षिङ्गसंगानुरङ्गः
प्रत्यासन्नः प्रलपति गुणी किं विदध्मः क्व यामः ॥ ८२४ ॥

आमोदैस् ते दिशि दिशि गतैर्दूरमाकृष्यमाणा
साक्षाल् लक्ष्मीं तव मलयज द्रष्टुमभ्यागताः स्मः ।
किं पश्यामस् तव परिसरे नावकाशो द्विजिह्वैर्
व्याप्तोऽस्माकं भवतु भवतां स्वस्ति यामो वयं तु ॥ ८२५ ॥

---

818 NS1 Ś12.— SRB. p. 362. 24; SS. 23. 8; SMV. 8. 19.

819 ISM Gore144 V184. 820 ASP1461 extra4. — SRB. p. 18. 25.

821 Ady XXV-L-2 Ś41.

822 Wai2 extra10. — SRB. p. 225. 129 (begins with अथ); ST. 10. 2; SSD. 2. f. 22a.

823 E2 Ś113 (extra). — [a]) परिमलस्तोयं; F4 Ś107. — [b]) अपि (for इव), and आरब्ध- (for प्रारब्ध-). — [c]) त्वरया (for त्वरितो). — [d]) लिप्ते पिच्छिलकेरलीकुचतटे. — SRB. p. 334. 133; SRK. p. 174. 1 (Śp.); VS. 639; SU. 809 (Akbarī-Kālidāsa); BPS. f. 16b. 93.

824 Q1 f. 12a, extra.

825 Q1 extra3. — BIS. 978 (366). Śp. 998; SRB. p. 237. 52; SDK. 4. 51. 2 (p. 261, Acalasimha); SKM. 33. 24. All anthologies [cd]) किं पश्यामः सुभग भवतः क्रीडति क्रोड एव व्यालस्तुभ्यं भवतु कुशलं मुञ्च नः साधु (°ध-) यामः ॥

इलिका भ्रमरीध्यानं ध्यायन्ती भ्रमरी भवेत् ।
वीतरागपदं ध्यायन् वीतरागो भवेद् ध्रुवम् ॥ ८२६ ॥
ऐश्वर्यतिमिरं चक्षुः पश्यतोऽपि न पश्यति ।
पुनर्निर्मलतां याति दरिद्राञ्जनमौषधम् ॥ ८२७ ॥
कुचैलागतभर्तारो शूरो सन्मुखखण्डना ।
दातारो वस्त्रहीनाश् च कुरूपा रूपचिन्तये ॥ ८२८ ॥
को धर्मो भूतदया किं सौख्यमारोग्यता जन्तोः ।
[कः] स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥ ८२९ ॥
क्षणं रटन्ती रुदती नृत्यन्ती याति विह्वला ।
निःसहत्वं तदा याति मुकुलीकृतलोचना ॥ ८३० ॥
जलमध्ये दीयते दानं प्रतिग्राही न जीवति ।
दातारो नरके यान्ति तस्याहं कुलबालिका ॥ ८३१ ॥
निरक्षरान् वीक्ष्य धनाधिनाथान् त्याज्या न विद्या कृतिभिः कदाचित् ।
आभुक्तमुक्तां कुलटां समीक्ष्य किमार्यनार्यः कुलटा भवन्ति ॥ ८३२ ॥
पत्रं न चित्रमपि निष्प पान्थखेदच्छेदक्षमं विषसमं तव मुग्ध दुग्धम् ।
धूर्तप्रपञ्चितमहातरुकीर्तनेन रे निःफलस् त्वमसि कण्टकितश् च नित्यम् ॥ ८३३
पर्वताग्रे रथो यस्य भूमौ तिष्ठति सारथिः ।
चलितं वायुवेगेन तस्याहं पुत्रबालिका ॥ ८३४ ॥
पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु रत्नसंज्ञाभिधीयते ॥ ८३५ ॥
मन्त्रिणां भिन्नसंधाने भिषजां सन्निपातके ।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ८३६ ॥

---

826 Uda1650 V extra2.

827 Q1 f. 7a, extra. — SRH. 167. 1 (Vyāsa). 828 Q1 extra5.

829 Uda1650 N103 (4, final). — BIS. 1929 (747). Hit. ed. Schl. I. 140. ed. Johns. 156. ed. Rodr. p. 96; SRB. p. 170. 769.

830 Lim1739 f. 8a, extra. 831 Q1 f. 10b, extra.

832 Lim1485 f. 16a, extra. — SRB. p. 173. 859. 833 Q1 extra4.

834 Q1 f. 10b, extra. — SRB. p. 185. 27.

835 Uda1650 V extra1. — BIS. 4186 (4571). Vṛddha-cāṇ. 14. 1. Subhāsh. 104; SRB. p. 29. 6; SRK. p. 1. 6.

836 Uda1650 N102 (3). — BIS. 4706 (2116). Pañc. ed. Koseg. I. 143. ed. Orn. 103. ed. Bomb. 127. 381. Hit. ed. Schl. III, 119. Johns. 124. ed. Calc. 1830. p. 396; SRB. p. 164. 507.

रदननिःपतिता वलिता गता वलिभिरावलितं पलितं वपुः ।
विषयकर्दमदुर्दमवाञ्छया तदपि नात्महितं विहितं जडैः ॥ ८३७ ॥

वाङ्मनःकायशुद्धानां संपदश् च पदे पदे ।
अन्तर्मलिनचित्ताय सुखं स्वप्नेऽपि दुर्लभम् ॥ ८३८ ॥

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेन प्रियायाः ।
इति यदि शतकृत्वस् तत्त्वमालोकयामि
तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ ८३९ ॥

उत्तुङ्गशैलशिखरे ननु पादपस्य काकोऽपि पक्वफलमालभते सपक्षः ।
सिंहो बली गजविदारणदारुणोऽपि सीदत्यहो तरुतले निजपक्षहीनः ॥ ८४० ॥

कक्षे किं मितपुस्तकं किमुदकं * काव्यसारोदकं
दीर्घं किं यदि ताडपत्रलिखितं किं चित्र गौडाक्षरं ।
गन्धे किं यदि रामरावणकथासङ्ग्रामगन्धो महत्
किं वारं बहु जल्पसे शृणु सखे नाम्ना पुराणो झपः ॥ ८४१ ॥

क्रियादौषधवत् कामः प्रभुत्वात् केवलश्रमः ।
करवन् निजदारेषु योऽन्यः * * स मन्मथः ॥ ८४२ ॥

गतं न शोचामि कृतं न मन्ये खादन् न गच्छामि हसन् न जल्पे ।
द्वाभ्यां तृतीयो न [भ]वामि राजन् किं कारणं भोज भवामि मूर्खः ॥८४३॥

जङ्घान्तराले विमले विशाले अधोमुखी रोमवने वसन्ती ।
सा पातदेवी भगनामधेयं दन्तैर्विना यान्ति गिरन्ति लिङ्गम् ॥ ८४४ ॥

नाहं कामो महाराज हंसोऽयं विमले जले ।
नीचहंसप्रसङ्गेन मृत्युरेव न संशयः ॥ ८४५ ॥

पूर्वे मांसमिदं न दूषणकृतं कर्णाट गोवाहनं
याम्ये मातुलजाविवाह बहवो भर्तार पश्चालिके ।
कन्याविक्रय गुर्जरे गृहवधूः सौराष्ट्रमारुस्थले
धन्यो मालवमण्डलो क्षितितले लोकस्य धर्मे रतिः ॥ ८४६ ॥

---

837 Q1 f. 12b, extra. 838 Q1 f. 7a, extra.

839 Ham 1074 (Dhanasāra) V extra 33. — BIS. 637. Śāntiś. p. 29; SRB. p. 252. 44 (Bilhaṇa); Śp. 566.

840 Haṃ 1836 V X-14. — BIS. 1193. Subhāsh. 174. 230; SRK. p. 176. 4 (Śp.); SRB. p. 230. 26.

841 Haṃ 1836 V X-13. 842 Haṃ (no number) Ś 49.

843 Haṃ 1836 N VIII-6. 844 Haṃ 1836 Ś, f. 25b, extra.

845 Haṃ 1836 N II-5. 846 Ham 1836 V X-12.

मम सखि दहति वसन्तं दक्षिणे वा महन्तं
दहति गिरिलतायां कोकिलामध्यवाक्यम् ।
मम पति मतिहीनं दूरदेशो निवासं
दहति मदनबाणं छिन्नभिन्नं शरीरम् ॥ ८४७ ॥

मान्धाता सुमहीपतिः कृतयुगेऽलंकारभूतो गतः
सेतुर्येन महोदधौ विरचितः क्वासौ दशास्यान्तकृत् ।
अन्ये चापि युधिष्ठिरप्रभृतयो यावद् भवान् भूपते
नैकेनापि समं गता वसुमती मन्ये त्वया यास्यति ॥ ८४८ ॥

यदि वाञ्छसि मूर्खत्वं ग्रामे दिनत्रयं वस ।
अपूर्वस्यागमो नास्ति पूर्वाधीतं विनश्यति ॥ ८४९ ॥

रे पान्थ पुस्तकधर क्षणमात्रमेकं
वैद्योऽसि किं गणितशास्त्रविशारदोऽसि ।
कामी भवत्यनुदिनं वद कोऽत्र हेतुर्
धिक् तां च तं च मदनं च इमां च मां च ॥ ८५० ॥

सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् ।
सा क्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ ८५१ ॥

उष्णमन्नं घृतं मद्यं तरुणी क्षीरभोजनम् ।
वापीकूपवटच्छाया षडेते बलवर्धनम् ॥ ८५२ ॥

---

847 Ham 1836 V X-15. 848 Ham (no numbers) extra 3. — BIS. 4831. Subhash. 164. 407; SRB. p. 372. 204 (Bhojarāja); Śp. 4002 (Bhojarāja on Muñja).

849 Ham 874 f. 8a, extra. 850 Ham 1836 V X-16. — SRB. p. 354. 74; begins भो पान्थ. — [cd]) केनौषधेन मम पश्यति भर्तुरम्बा किं वा गमिष्यति पतिः सुचिरप्रवासी. 851 Ham 1074 (Dhanasāra) V extra1. — BIS. 7002 (3236). Amar. 30. Sāh. D 324; SRB. p. 280. 92; SBH. 1346; SRH. 195. 14 (Amaruka).

852 Ham. 1836. N I-6.

## Group IV: Apocrypha.

### 1. The Viṭavṛtta.

[DC 11970; the first stanza is SBH. 10, with the citation "Viṭavṛttasya."]

नितम्बालसगामिन्यः पीनोन्नतपयोधराः ।
मन्मथाय नमस् तस्मै यस्यायतनमङ्गनाः ॥ १ ॥
मुदितमनोभवहासो रमणोरसि मुष्टिघातजो जयति ।
श्रुतिसुखमणितविमिश्रो वलयावलिकलकलो विलासिन्याः ॥ २ ॥
यासामर्जनशीलत्वान् न द्वेष्योऽस्ति न च प्रियः ।
न कृतं न च सद्भावो वञ्चनाबद्धचेतसाम् ॥ ३ ॥
आकारवेषसौभाग्यैः कन्दर्पप्रतिमोऽपि सन् ।
यासां संगममासाद्य प्राप्तः को वा न वञ्चनाम् ॥ ४ ॥
आजीवोच्छित्तये यासां प्रीतिद्वेषावुभौ हि तौ ।
कथं नु खलु तौ तासां स्यातामुपरि कस्यचित् ॥ ५ ॥
पश्चात्तापकरो यासां सर्वनाशसमुद्भवः ।
सदावसानविरसः संगमो जायते नृणाम् ॥ ६ ॥
आसमस्ताक्षिविक्षेपसमर्पितमनोभुवाम् ।
मन्मथोद्दीपनं तासां विटवृत्तं विधास्यते ॥ ७ ॥
रमन्ते किं न पशवः प्राणिधर्मानुवर्तिनः ।
वैदग्ध्यं कीदृशं पुंसां विटवृत्तमजानताम् ॥ ८ ॥
विटवृत्तं पठन् नार्या नरो यद्यपि मुह्यति ।
तथाप्यत्र विशेषोऽस्ति संनद्धस्येतरस्य वा ॥ ९ ॥
यत्र तत्रावलग्नासु प्रतिक्षणनिवर्तिषु ।
संपत्स्विव विदग्धानां रतिर्वेश्यासु कीदृशी ॥ १० ॥
विनोदमात्रमेवेदमिति यस्यावधारणा ।
विटवृत्तं स जानाति स कामफलमश्नुते ॥ ११ ॥
उदयस्थः सहस्रांशुर्दृष्टेरायाति गम्यताम् ।
अतिरिक्तं कदा कं वा लङ्घयन्ति न योषितः ॥ १२ ॥
आकारसंवृतिः कार्या सुरक्तेनापि कामिना ।
रक्तः परिभवं याति परिभूतः कथं प्रियः ॥ १३ ॥
अरक्ते न सुखं वेत्ति नारक्तो दुःखमश्नुते ।
दुःखानां च सुखानां च रक्त एवास्पदं सदा ॥ १४ ॥

रक्तः श्वसिति दीर्घाणि रक्तो लज्जां विमुञ्चति ।
नाकार्यमीक्षते रक्तोऽरक्तो यात्यपहास्यताम् ॥ १५ ॥
परतन्त्रः सदा रक्तश्च चरणौ पण्ययोषिताम् ।
नापिताङ्गुष्ठवत् कामी संस्पृष्टं लभते यदि ॥ १६ ॥
शेते मया यथा सार्धं सान्येनापि तथा यदि ।
हा हतोऽस्मीति संरक्तो ध्यायन्नित्थं न जीवति ॥ १७ ॥
क आलप्तः प्रियः कोऽस्याः कं ध्यायति कमीक्षते ।
इति चिन्ता न यस्यासीत् स पूज्यः पण्ययोषिताम् ॥ १८ ॥
सुप्तान्येन सहान्येयं श्वो मां संभावयिष्यति ।
न चेच्छ्वो विततं किं स्यादिति ध्यायन् प्रियो भवेत् ॥ १९ ॥
सेवतेऽवसरप्राप्तावप्राप्तौ यो न दुःखितः ।
न दुःखाभिभवस्तस्य पण्यनारीषु जायते ॥ २० ॥
सुखोपायमशक्यं च यस्य चेष्टितमीदृशम् ।
नासावपैति मनसः स्त्रीणामा मरणादपि ॥ २१ ॥
नाकाले नानवसरे या भुक्ता दूतपूर्वकम् ।
वेश्यावेश्मनि कर्तव्यं नान्यत् कामुकसंनिधौ ॥ २२ ॥
नात्यन्तं दर्शयेद् देयं न चात्यन्तमदर्शनम् ।
ईर्ष्याभावो न चात्यन्तं कोपो नात्यन्तमिष्यते ॥ २३ ॥
ईर्ष्याद्धि कुप्यते वेश्या प्रसङ्गाच्च च विरज्यते ।
स्तब्धातिगमनाच्चापि दानादपि विलुप्यते ॥ २४ ॥
ग्राह्यं नाम न चान्यस्य कामुकस्य तदग्रतः ।
प्रसङ्गो नातिकर्तव्यं पूर्वं किंचिन्न सूचिते ॥ २५ ॥
द्वेष्यः स्यात् सूचिताभावे प्रयात्यन्यत्र कौतुकम् ।
अकामा चान्यकामा च निद्राक्रान्तेक्षणापि वा ।
असंजातरतेच्छा च नाभियोज्याबला बलात् ॥ २६ ॥
आविष्करोति न स्नेहं रागं बध्नाति नो रते ।
अभियुक्ता तु मन्देच्छा सान्यकामा तु कामिनी ॥ २७ ॥
आलापयत्यकार्याणि किंचिदाख्याति वा स्वयम् ।
या न प्रयाति शयनं साप्यनुत्पन्नसस्पृहा ॥ २८ ॥
संचिन्तिता किमन्यं कं को वान्यो हृदये स्थितः ।
ज्ञातमेव मया त्वेष यथाहं न प्रियस्तव ॥ २९ ॥

आगतोऽहं * * * * * * * * न्न चेक्षितः ।
गाढालिङ्गननिर्वाणं कदाहं प्रापितस् त्वया ॥ ३० ॥
कामिनश् चरितैरेभिः कुर्वन्तो निशि जागरम् ।
कुर्वन्त्यप्रियमात्मानं केचिन् मूढाः प्रिया अपि ॥ ३१ ॥
नीत्वात्मानं प्रकाशत्वमन्यया योषिता सह ।
कारयेत् कलहं कामी प्रीतिमिच्छन् सदात्मनः ॥ ३२ ॥
यत्र यत्र करोतीर्ष्यां कलहो वा यया सह ।
यया कामुकवैरं च निवारयति यां प्रति ॥ ३३ ॥
उक्तस् ते रुधिरेणाहं स्पृष्टं ते मस्तकं मया ।
इत्येताञ् शपथान् कृत्वा सा वै गम्या पुनः पुनः ॥ ३४ ॥
प्रतिकूलतमं यद्यदेकस्मिञ्शयने स्त्रियः ।
वामत्वात् पुष्पधनुषस् तत् तत् प्रेमनिबन्धनम् ॥ ३५ ॥
ग्राह्यं नाम विपक्षस्य मृषासुप्तेन कामिना ।
प्रतिभेदे कृतं शीघ्रं कर्तव्यो निह्नवः सदा ॥ ३६ ॥
रात्रौ सुरतसंभोगलालसा शयने [ र ]ता ।
विपक्षप्रेष्ययत्नानां मुक्तवाचानभिज्ञता ॥ ३७ ॥
तिष्ठ तावदयं कोऽपि बहिः किमपि जल्पति ।
इत्युक्त्वा निर्गतः शीघ्रमपि देवकुलं व्रजेत् ॥ ३८ ॥
त्यक्त्वा स मां कथं नाम गत्वा सुप्तस् तया सह ।
इति चिन्ताकृतोऽमर्षः प्रादुर्भवति चेतसि ॥ ३९ ॥
आमर्षान् मदनः सद्यो दीप्तश् चेतसि जायते ।
स वृद्धिं नीयते कामं तस्मिन् द्वेष्येऽपि योषिताम् ॥ ४० ॥
चिन्तितं यदनेनासीद् देयं बह्वल्पमेव वा ।
देयं तेनाधुना तस्यै कालेनेति न संशयः ॥ ४१ ॥
हस्ते कृता सुरूपा च फलेनापि सुयोजिता ।
वीटिकेवाङ्गना रागं न हि बध्नाति खण्डिता ॥ ४२ ॥
कुट्टिन्या सह कर्तव्यः कलहो निपुणस् तथा ।
समुपैति यथा द्वेषं तत्पुरं प्रोच्यतेऽपि यः ॥ ४३ ॥
किमस्माकमनेनेति कुट्टिन्या यत्र वार्यते ।
कामुके कामिनी तस्मिन् नितरामनुरज्यते ॥ ४४ ॥
गुरुबन्धुसुहृद्वर्गप्रतिषेधेन्धनेरितम् ।
मदनाग्निर्ज्वलत्युच्चैर्योषितः पुरुषस्य वा ॥ ४५ ॥

विटानां चरितैरेभिः कषायैस् तु कषायिता ।
सुतरां रज्यते नारी न च रागं विमुञ्चति ॥ ४६ ॥
नारी रक्तानुरक्ता चाप्यतिरक्ता तथापरा ।
संक्षेपात् कामतन्त्रज्ञैस् त्रिविधैव निगद्यते ॥ ४७ ॥
नाभिलाषो रते यस्याः पूर्वं समुपजायते ।
प्रयुक्ते च न चोद्वेगं सा रक्ता संप्रकीर्तिता ॥ ४८ ॥
रतिं प्रार्थयते या तु तत्र याति परां मुदम् ।
न च तेन विनैवास्ते सानुरक्ताभिधीयते ॥ ४९ ॥
प्राप्तापि रतिसंभोगं रतेच्छां या न मुञ्चति ।
अभियोक्त्री भवेद् भूयः सातिरक्ता प्रकीर्तिता ॥ ५० ॥
यथोक्तलक्षणैर्ज्ञेया यथायोगं विपर्ययात् ।
त्रिविधैव विरक्तोक्ता कामिनी कामपण्डितैः ॥ ५१ ॥
त्रिविधस् तु मतः कामी प्रियोऽनुप्रिय एव च ।
अतिप्रियस् तु विज्ञेयस् तृतीयः कामवेदिभिः ॥ ५२ ॥
प्रथमायाः प्रियो ज्ञेयो मध्यमायास् त्वनुप्रियः ।
अतिप्रियस् तृतीयायास् तथा योऽन्यो न सेवते ॥ ५३ ॥
प्रबोधयति या सुप्तं निद्रया नाभिभूयते ।
भूयः सुरतमप्राप्य नैवाप्तेनातिरागिणी ॥ ५४ ॥
या तु पश्यत्यपश्यन्तं मदमायाति वीक्षिता ।
वीक्षितं चेक्षते नित्यं विज्ञेया सानुरागिणी ॥ ५५ ॥
रक्ताल्पमपि या दानं कामिनी बहु [म]न्यते ।
अतोऽन्यथापि विज्ञेया विपरीता विचक्षणैः ॥ ५६ ॥
गत्वा वेश्यासु विश्वासं प्रियोऽस्मीति च कामिना ।
वेश्यागृहे न न्यस्तव्यं सारद्रव्यं कदाचन ॥ ५७ ॥
अनृजुत्वमसद्भावं कार्पण्यं चलचित्तता ।
पुंसां मित्रेषु ये दोषास् ते वेश्यासु गुणाः स्मृताः ॥ ५८ ॥
क्षीणठक्कुरदत्तस्य वेश्याहस्तगतस्य च ।
निक्षिप्तस्य किरातेन पुनर्मोक्षो न विद्यते ॥ ५९ ॥
मरुदेशसमुत्पन्नशिलासलिलसंनिभम् ।
कामिना सर्वदा दानं वेश्यास्त्रीषु प्रशस्यते ॥ ६० ॥
देशकालानतिक्रान्तमसूचितमयाचितम् ।
सोपयोगं तथाल्पं च दानं प्रेमनिबन्धनम् ॥ ६१ ॥

यावद् ददाति नाशेषमहार्यं पण्ययोषिताम् ।
तावदप्रियमप्येनं भुञ्जते प्रियवद् बलात् ॥ ६२ ॥
युगपद् बहु संप्राप्य वेश्या त्यजति कामिनम् ।
सपदि प्रियमप्येनं वैरं वा कुरुते ध्रुवम् ॥ ६३ ॥
दातव्यं मुखताम्बूलमप्रियेण प्रियेण वा ।
अवल्लभेन नात्यर्थं तदेवेष्टजनप्रियम् ॥ ६४ ॥
वयः शीतन्त्वचीमुस्तान्धूपोऽल्पो मुखवासकम् ।
पत्रं खदिरसंयुक्तं तथा सर ......... ॥ ६५ ॥
विटैरेवं तु वामानामेतान्येवंविधानि तु ।
देशकालोपपन्नानि प्रीयते न च तद्वचः ॥ ६६ ॥
ताम्बूलं मदिरा माल्यं सुगन्धं च विलेपनम् ।
अतिव्ययेन दातव्यं रतिकालोपयोगतः ॥ ६७ ॥
विटैरनेकवेश्यानामेकान्येवंविधानि तु ।
देशकालोपपन्नानि प्रियाण्येव न चाप्रियम् ॥ ६८ ॥
इमानि प्रायशस् तानि वेश्यास्वेवं प्रदापयेत् ।
सा मुञ्चत्यचिरात् सर्वमुपभोगं तदात्मनः ॥ ६९ ॥
प्रत्यागतेन संपर्कं निर्विघ्नमभिवाञ्छता ।
न देयं गच्छताध्वानं योषितां पूर्वकल्पितम् ॥ ७० ॥
आलोकयति पन्थानं दास्यतीत्यागतः किल ।
रचयत्यादराद् वेणीं यदि नान्यैर्वशीकृता ॥ ७१ ॥
अपरित्यक्तमात्मानमिच्छता पण्ययोषिताम् ।
नित्यौपयोगिकं द्रव्यमात्मसारं प्रदर्शयेत् ॥ ७२ ॥
ग्राह्यं ग्रहणकं किंचिद् व्यपदेशेन केनचित् ।
हस्ते तिष्ठति तद्यावत् तावदन्यं न सेवते ॥ ७३ ॥
कुतश्चित् संप्रदर्श्यैव केयूरमकरादिकम् ।
कुट्टिन्या च सहोद्धारं तन्नाम्नैवाभिलेखयेत् ॥ ७४ ॥
वेश्यया सह संभोगं नीत्वा द्रव्यं तदात्मनः ।
कृत्वा तदवशिष्टेन [देयं] दत्त्वा प्रशस्यते ॥ ७५ ॥
यस्मिन् प्रार्थयते काले सुवर्णं पूर्वमर्पितम् ।
तद्विटस्यातिसंधातुं न्यायं तत्रेदमुत्तरम् ॥ ७६ ॥
स्वयं देयः स उद्धारस् तुल्यमत्राल्पयापि वा ।
सर्वं च मातृनाम्नैव वणिजं किं न पृच्छसि ॥ ७७ ॥

यदि वा रक्तया दत्तं तथापि त्वं न शोभसे ।
अहं गोपायिता तस्य कस्योक्तं वा मया पुनः ॥ ७८ ॥

कोशात् तदप्यधिष्ठानं कर्तव्यं शुद्धचेतसा ।
शपथी हीनदोषाय कामिनीपूच्यते बुधैः ॥ ७९ ॥

नां पुरो देयो व्यवहारस्तु कामिना ।
वेश्यां यो नातिसंधत्ते मूढोऽसाविति साध्यते ॥ ८० ॥

तदेवार्थयते येन पूर्वोक्तं नोत्तरं स्पृहा ।
यथार्थं व्यवहारज्ञा वेश्या भूयो न वञ्च्यते ॥ ८१ ॥

नासावा मरणादित्थं परित्यजति तं विटम् ।
उभयोस्त्यागजं दुःखं कः कुर्यादर्थमित्रयोः ॥ ८२ ॥

हितमिममुपदेशं कुर्वता लोकदृष्टिं मितमपरिमितार्थं यन्मयोपात्तमत्र ।
जनितयुवतिरागाः सन्तु पुण्येन तेन प्रतिहतरतिविघ्नाः प्राणिनः सौख्यभाजः ८३

जानकीवदनोल्लासहेतुं सेतुं बबन्ध यः ।
तत्पादसेविनालेखि विटवृत्तं द्विजन्मनाम् ॥ ८४ ॥

॥ इति विटवृत्तम् ॥

## 2 The Vijñānaśataka.

[In reporting variants, N refers to the Nāgpur edition of 1897, B to the current Bombay edition; B śloka numbers are given in brackets or footnotes wherever they differ from N numbers.]

विगलदमलदानश्रेणिसौरभ्यलोभोपगतमधुपमालाव्याकुलाकाशदेशः ।
अवतु जगदशेषं शश्वदुग्रात्मजो यो विपुलपरिघदन्तोद्दण्डशुण्डो गणेशः ॥ १ ॥
यत्सत्तया शुचि विभाति यदात्मभासा प्रद्योतितं जगदशेषमपास्तदोषम् ।
तद् ब्रह्म निष्कलमसङ्गमपारसौख्यं प्रत्यग् भजे परममङ्गलमद्वितीयम् ॥ २ ॥
माता मृता जनयितापि जगाम शीघ्रं लोकान्तरं तव कलत्रसुतादयोऽपि ।
भ्रातस् तथापि न जहासि मृषाभिमानं दुःखात्मके वपुषि मूत्रकुदर्पकूपे ॥ ३ ॥
ब्रह्मामृतं भज सदा सहजप्रकाशं सर्वान्तरं निरवधि प्रथितप्रभावम् ।
यद्यस्ति ते जिगमिषा सहसा भवाब्धेः पारे परे परमशर्मणि निष्कलङ्के ॥ ४ ॥
आरभ्य गर्भवसतिं मरणावसानं यद्यस्ति जीवितुमदृष्टमनेककालम् ।
जन्तोस् तथापि न सुखं सुखविभ्रमोऽयं यद् बालया रतिरनेकविभूतिभाजः ॥ ५
सा रोगिणी यदि भवेदथ वा विवर्णा बाला प्रिया शशिमुखी रसिकस्य पुंसः ।
शल्यायते हृदि तथा मरणं कृशाङ्ग्यायत्तस्य सा विगतनिद्रसरोरुहाक्षी ॥ ६ ॥
त्वत्साक्षिकं सकलमेतदवोचमित्थं भ्रातर्विचार्य भवता करणीयमिष्टम् ।
येनेदृशं न भविता भवतोऽपि कष्टं शोकाकुलस्य भवसागरमग्नमूर्तेः ॥ ७ ॥
निष्कण्टकेऽपि न सुखं वसुधाधिपत्ये कस्यापि राजतिलकस्य यदेष देवः ।
विश्वेश्वरो भुजगराजविभूतिभूषो हित्वा तपस्यति चिरं सकला विभूतीः ॥ ८ ॥
भूमण्डलं लयमुपैति भवत्यबाधं लब्धात्मकं पुनरपि प्रलयं प्रयाति ।
आवर्तते सकलमेतदनन्तवारं ब्रह्मादिभिः सममहो न सुखं जनानाम् ॥ ९ ॥

यदा देवादीनामपि भवति जन्मादि नियतं
महाहर्म्यस्थाने ललितललनालोलमनसाम् ।
तदा कामार्तानां सुगतिरिह संसारजलधौ
निमग्नानामुच्चै रतिविषयशोकादिमकरे ॥ १० ॥ (४७)

स्वयं भोक्ता दाता वसु सुबहु संपाद्य भविता
कुटुम्बानां पोष्टा गुणनिधिरशेषेप्सितनरः ।
इति प्रत्याशस्य प्रबलदुरितानीतविधुरं
शिरस्यस्याकस्मात् पतति निधनं येन भवति ॥ ११ ॥ (७२)

---

1 [c]) N °त्मदर्प्यौ?; B °त्मदर्पौ. — [d]) B °परिधिदन्तो°. 2 [a]) B सदिदमस्ति (for शुचि विभाति). 6 [c]) B कृशाङ्गी (for कृशाङ्ग्या-). 7 [c]) B भवति (for भविता). 8 [d]) B विभूतिः. 10 [b]) B महारम्ये स्थाने.

B numbers: 3 = 61, 4 = 29, 5 = 59, 6 = 69, 7 = 64, 8 = 70, 9 = 74.

विपश्चिद् देहादौ क्वचिदपि ममत्वं न कुरुते
  परब्रह्मध्याता गगननगराकारसदृशे ।
निरस्ताहंकारः श्रुतिजनितविश्वासमुषितो
  निरातङ्कोऽव्यग्रः प्रकृतिमधुरालापचतुरः ॥ १२ ॥

अरे चेतश् चित्रं भ्रमसि यदपास्य प्रियतमं
  मुकुन्दं पार्श्वस्थं पितरमपि मान्यं सुमनसाम् ।
बहिः शब्दाद्यर्थे प्रकृतिचपले क्लेशबहुले
  न ते संसारेऽस्मिन् भवति सुखदाद्यापि विरतिः ॥ १३ ॥ (७६)

न जानीषे मूर्ख क्वचिदपि हितं लोकमहितं
  भ्रमद्भोगाकाङ्क्षाकलुषिततया मोहबहुले ।
जगत्यत्रारण्ये प्रतिपदमनेकापदि सदा
  हरिध्याने व्यग्रं भव सकलतापैककदने ॥ १४ ॥ (४८)

वियद्भूतं भूतं यदवनलभं (?) चाखिलमिदं
  महामायासङ्गाद् भुजग इव रज्ज्वां भ्रमकरम् ।
तदत्यन्ताह्लादं ह्यजरममरं चिन्तय मनः
  परब्रह्माव्यग्रं हरिहरसुराद्यैरवगतम् ॥ १५ ॥ (२३)

न चेत् ते सामर्थ्यं भवनमरणातङ्कहरणे
  मनोऽनिर्दिष्टेऽस्मिन्नपगतगुणे ज्ञातुमकले ।
तदा मेघश्यामं कमलदलदीर्घाक्षममलं
  भजस्व श्रीरङ्गं शरदमृतधामाधिकमुखम् ॥ १६ ॥

क्व यातः क्वायातो द्विज कलयसे रत्नमटवीम्
  अटन् व्याघ्राघ्रातो मरणमगमद् विश्वमहितः ।
अयं विद्यारामो मुनिरह ह केनापि विदुषा
  न खल्वात्मप्रायो भवतु सुकरो ज्ञातुमशिवः ॥ १७ ॥ (*)

अहं श्रान्तोऽध्वानं बहुविधमतिक्रम्य विषमं
  धनाकाङ्क्षाक्षिप्तः कुनृपतिमुखालोकनपरः ।
इदानीं केनापि स्थितिमुदरकूपस्य भरणे
  कदन्नेनारण्ये क्वचिदपि समीहे स्थिरमतिः ॥ १८ ॥ (७७)

---

12 [c]) B °विश्वाससुभगो. 14 [a]) B चेतः (for मूर्ख). 15 [a]) B वियत्पृथ्वीवायुज्वलनजलजं° चाखि°. — [c]) N विजरममरं. 16 [b]) N अवगत- (for अपगत-).
17 Omitted in B.

यमाराध्याराध्यं त्रिभुवनगुरोराप्तवसतिर्
ध्रुवो ज्योतिश्चक्रे सुचिरमनवद्यं शिशुरपि ।
अवाप प्रह्लादः परमपदमाराध्य यमितः
स कस्यालं क्लेशो हरति न हरिः कीर्तितगुणः ॥ १९ ॥ (८)

कदाचित् कष्टेन द्रविणमधमाराधनवशान्
मया लब्धं स्तोकं निहितमवनौ तस्करभयात् ।
ततो नित्ये कश्चित् क्वचिदपि तदाखुर्बिलगृहेऽ-
नयल्लुब्धोऽप्यर्थो न भवति यदा कर्म विषमम् ॥ २० ॥ (७१)

जगाम व्यर्थं मे बहुदिनमथार्थार्थिततया
कुभूमीपालानां निकटगतिदोषाकुलमतेः ।
हरिध्यानव्यग्रं भवितुमधुना वाञ्छति मनः
क्वचिद् गङ्गातीरे तरुणतुलसीसौरभभरे ॥ २१ ॥ (५६)

कदा भागीरथ्या भवजलधिसंताररतरणेः
स्खलद्वीचीमालाचपलतलविस्तारितमुदः ।
तमःस्थाने कुञ्जे क्वचिदपि निविश्याहृतमना
भविष्याम्येकाकी नरकमथने ध्यानरसिकः ॥ २२ ॥ (८५)

कदा गोविन्देति प्रतिदिवसमुल्लासमिलिताः
सुधाधाराप्रायास् त्रिदशतटिनीवीचिमुखरे ।
भविष्यन्त्येकान्ते क्वचिदपि निकुञ्जे मम गिरो
मरालीचक्राणां स्थितिसुखरवाक्रान्तपुलिने ॥ २३ ॥ (८६)

यदध्यस्तं सर्वं स्रजि भुजगवद् भाति पुरतो
महामायोद्गीर्णं गगनपवनाद्यं तनुभृताम् ।
भवेत् तस्या भ्रान्तेर्मुररिपुरधिष्ठानमुदये
यतो न स्याद् भ्रान्तिर्निरधिकरणा क्वापि जगति ॥ २४ ॥ (२२)

चिदेव ध्यातव्या सततमनवद्या सुखतनुर्
निराधारा नित्या निरवधिरविद्यादिरहिता ।
अनास्थामास्थाय भ्रमवपुषि सर्वत्र विषये
सदा शेषव्याख्यानिपुणमतिभिः ख्यातयतिभिः ॥ २५ ॥ (३०)

19 [a]) B °गुरुं प्राप वसतिं (for °गुरोराप्तवसतिर्). — [b]) B अनवद्यां. 20 [c]) B नैजे (for नित्ये). 21 [a]) B °मथार्थार्थि तनयाः. — [b]) B निकटमतिदोषा°. 22 [a]) B °संसारतरणेः. 23 [c]) B °मिलितः. — [d]) B श्रुति- (for स्थिति-). 24 [c]) B उदयं (for उदये).

अहोऽत्यर्थेऽप्यर्थे श्रुतिशतगुरुभ्यामवगते
निषिद्धत्वेनापि प्रतिदिवसमाधावति मनः।
पिशाचस्तु तत्रैव स्थिररतिरसारेऽपि चपलो
न जाने केनास्य प्रतिकृतिरनार्यस्य भविता ॥ २६ ॥ (७५)

नित्यानित्यपदार्थतत्त्वविषये नित्यं विचारः सतां
संसर्गे मितभाषिता हितमिताहारोऽनहंकारिता।
कारुण्यं कृपणे जने सुखिजने प्रीतिः सदा यस्य स
प्रायेणैव तपः करोति सुकृती चेतोमुकुन्दप्रियः ॥ २७ ॥ (१३)

सा गोष्ठी सुहृदां निवारितसुधास्वादाधुना क्वागमत्
ते धीरा धरणीधरोपकरणीभूता ययुः क्वापरे।
ते भूपा भवभीरवो भवरताः क्वागुर्निरस्तारयो
हा कष्टं क्व च गम्यतें न हि सुखं क्वाप्यस्ति लोकत्रये ॥२८॥ (७८)

भानुर्भूवलयप्रदक्षिणगतिः क्रीडारतिः सर्वदा
चन्द्रोऽप्येष कलानिधिः कवलितः स्वर्भानुना दुःखितः।
ह्रासं गच्छति वर्धते च सततं गीर्वाणविश्रामभूस्
तत् स्थानं खलु यत्र नास्त्यपहतिः क्लेशस्य संसारिणाम् ॥२९॥ (७३)

संसारेऽपि परोपकारकरणख्यातव्रता मानवा
ये संपत्तिगृहा विचारचतुरा विश्वेश्वराराधकाः।
तेऽप्येनं भवसागरं जनिमृतिग्राहाकुलं दुस्तरं
गम्भीरं सुतरां तरन्ति विविधव्याध्याधिवीचीमयम् ॥ ३० ॥ (१४)

रे रे चित्त मदान्ध मोहबधिरा मिथ्याभिमानोद्धता
व्यर्थेयं भवतां धनावनरतिः संसारकारागृहे।
बद्धानां निगडेन गात्रममतासंज्ञेन यत्कर्हिचिद्
देवब्राह्मणभिक्षुकादिषु धनं स्वप्नेऽपि न व्येति वः ॥ ३१ ॥ (५२)

यावत् ते यमकिंकराः करतलक्रूरासिपाशादयो
दुर्दान्ताः सृणिराजदीर्घसुनखादंष्ट्राकरालाननाः।
नाकर्षन्ति नरान् धनादिरहितान् यत् तावदिष्टेच्छया
युष्माभिः क्रियतां धनस्य कृपणास् त्यागः सुपर्वादिषु ॥३२॥ (६)

26 c) N चपलं (for चपलो). 27 d) B शश्वन्मुकुन्द°. 31 a) B चित्तमदान्ध.

देहाद्यात्ममतानुसारि भवतां यद्यस्ति मुग्धं मतं
वेदव्यासविनिन्दितं कथमहो पित्राद्यपत्ये तदा ।
दाहादिः क्रियते विशुद्धफलको युष्माभिरुद्वेजितैः
शोकेनार्थपरायणैरपसदैर्दृष्टार्थमात्रार्थिभिः ॥ ३३ ॥ (११)

अद्य श्वो वा मरणमशिवं प्राणिनां कालपाशैर्
आकृष्टानां जगति भवतो नान्यथात्वं कदाचित् ।
यद्यप्येवं न खलु कुरुते हा तथाप्यर्थलोभं
हित्वा प्राणी हितमवहितो देवलोकानुकूलम् ॥ ३४ ॥ (५१)

दष्टप्रायं विकलमखिलं कालसर्पेण विश्वं
क्रूरेणेदं शिव शिव मुने ब्रूहि रक्षाप्रकारम् ।
अस्यास्त्येकं शृणु मुररिपोर्ध्यानपीयूषपानं
त्यक्त्वा नान्यत् किमपि भुवने दृश्यते शास्त्रदृष्ट्या ॥ ३५ ॥ (६७)

ध्यानव्यग्रं भवतु तव हृत्तिष्ठतो यत्र तत्र
श्रीमद्विष्णोस् त्रिभुवनपतेर्नित्यमानन्दमूर्तेः ।
लक्ष्मीचेतःकुमुदविपुलानन्दपीयूषधाम्नो
मेघच्छायाप्रतिभटतनोः क्लेशसिन्धुं तितीर्षोः ॥ ३६ ॥ (१९)

कामव्याघ्रे कुमतिफणिनि स्वान्तदुर्वारनीडे
मायासिंहीविहरणमहीलोभभल्लूकभीमे ।
जन्मारण्ये न भवति रतिः सज्जनानां कदाचित्
तत्त्वज्ञानां विषयतुषिताकण्टकाकीर्णपार्श्वे ॥ ३७ ॥ (६२)

यामासाद्य त्रिलोकीजनमहितशिवावल्लभारामभूमिं
ब्रह्मादीनां सुराणां सुखवसतिभुवो मण्डलं मण्डयन्तीम् ।
नो गर्भे व्यालुठन्ति क्वचिदपि मनुजा मातुरुत्क्रान्तिभाजस्
तां काशीं नो भजन्ते किमिति सुमतयो दुःखभारं वहन्ते ॥३८॥(९३)

किं कुर्मः कं भजामः किमिह समुदितं साधनं भो वयस्याः
संसारोन्मूलनाय प्रतिदिवसमिहानर्थशङ्कावतारः ।
भ्रातर्ज्ञातं निदानं भवभयदलने संगतं सज्जनानां
तां काशीमाश्रयामो निरुपमयशसः स्वः स्रवन्त्या वयस्याम् ॥३९(९७)

34 [a]) N अशिवप्राणिनां. — [b]) B भवति (for भवतो). 35 [a]) B दष्टं प्रायो (for दष्ट-). — [c]) N श्रुणु. 36 [a]) B हृदयं (for तव हृत्). 37 [b]) B °वने (for °मही-). — [c]) B जन्मन्यस्मिन्भवति विरतिः. — [d]) B विषयविषमाकण्ट°. 38 [b]) B °भुवां मण्डलं मण्डयन्ति. — [d]) B वहन्तः (for वहन्ते). 39 [a]) N किं (for भो).

भुक्तिः क्वापि न मुक्तिरस्त्यभिमता क्वाप्यस्ति मुक्तिर्न सा
काश्यामस्ति विशेष एव सुतरां श्लाघ्यं यदेतद् द्वयम् ।
सर्वैरुत्तममध्यमाधमजनैरासाद्यतेऽनुग्रहाद्
देवस्य त्रिपुरद्विषः सुरधुनीस्नानावदातव्ययैः ॥ ४० ॥ (९८)

विद्यन्ते द्वारकाद्या जगति बहुविधा देवताराजधान्यो
यद्यप्यन्यास् तथापि स्खलदमलजलावर्तगङ्गातरङ्गा ।
काश्येवारामकूजत्पिकशुकचटकाक्रान्तदिक्कामिनीनां
क्रीडाकासारशाला जयति मुनिजनानन्दकन्दैकभूमिः ॥ ४१ ॥ (९४)

काशीयं समलंकृता निरुपमस्वर्गापगासंभव-
स्थूलोच्चारतरङ्गबिन्दुविलसन्मुक्ताफलश्रेणिभिः ।
चञ्चच्चञ्चलचञ्चरीकनिकरश्यामाम्बरा राजते
कासारस्थविनिद्रपद्मनयना विश्वेश्वरप्रेयसी ॥ ४२ ॥ (९५)

वह्निप्राकारबुद्धिं जनयति वलभीवासिनां नागराणां
गन्धारण्यप्रसूतस्फुटकुसुमचयः किंशुकानां शुकानाम् ।
चञ्च्वाकारो वसन्ते परमपदपदं राजधानी पुरारेः
सा काश्यारामरम्या जयति मुनिजनानन्दकन्दैकभूमिः ॥ ४३ ॥ (९६)

भजत विबुधसिन्धुं साधवो लोकबन्धुं
स्खलिततरङ्गं शंकराशीर्षसङ्गम् ।
दलितभवभुजंगं ख्यातमायाविभङ्गं
निखिलभुवनवन्द्यं सर्वतीर्थानवद्यम् ॥ ४४ ॥ (८७)

यदमृतममृतानां भङ्गरङ्गप्रसङ्ग-
प्रकटितरसवत्ताविभवं पीतमुच्चैः ।
दलयति कलिदन्तांस् तां सुपर्वस्रवन्तीं
किमिति न भजतातां ब्रह्मलोकावतीर्णाम् ॥ ४५ ॥ (८८)

स्वाधीने निकटस्थितेऽपि विमलज्ञानामृते मानसे
विख्याते मुनिसेवितेऽपि कुधियो न स्नान्ति तीर्थे द्विजाः ।
यत्तत्कष्टमहो विवेकरहितास् तीर्थार्थिनो दुःखिता
यत्र क्वाप्यटवीमटन्ति जलधौ मज्जन्ति दुःखाकरे ॥ ४६ ॥ (६३)

41 [a]) N कति न ता (for बहुविधा). — [d]) Ms. °शाला कुसुमपरिमलाकृष्टहृष्टालिमाला. 42 [a]) N °व्योमगा- (for °संभव°). — [c]) N °निकरारागाम्बरा. 45 [a]) B यममृतं°. — [c]) B कलिद्रोषांस्तां. 46 [d]) N has a lacuna for मज्ज°—°करे.

नाभ्यस्तो धातुवादो न च युवतिवशीकारकः कोऽप्युपायो
नो वा पौराणिकत्वं न सरसकविता नापि नीतिर्न गीतिः ।
तस्मादर्थार्थिनां या न भवति भवतश्च चातुरी कापि विद्वन्
ज्ञात्वेत्थं चक्रपाणेरनुसर चरणाम्भोजयुग्मं विभूत्यै ॥ ४७ ॥ (५३)

अर्थेभ्योऽनर्थजातं भवति तनुभृतां यौवनादिष्ववश्यं
पित्राद्यैरर्जितेभ्योऽनुपकृतिमतिभिः स्वात्मनैवार्जितेभ्यः ।
यस्माद् दुःखाकरेभ्यस्तमनुसर सदा भद्र लक्ष्मीविलासं
गोपालं गोपकान्ताकुचकलशतटीकुङ्कुमासङ्गरङ्गम् ॥ ४८ ॥ (५४)

भ्रातः शान्ते प्रशान्ते क्वचिदपि निपतन् मित्र रे भूधराग्रे
ग्रीष्मे ध्यानाय विष्णोः स्पृहयसि सुतरां निर्विशङ्के गुहायाम् ।
अन्विष्यंस्तादृगत्र क्षितिवलयतले स्थानमुन्मूल यावत्
संसारानर्थवृक्षं प्रथिततममहामोहमूलं विशालम् ॥ ४९ ॥ (१७)

केदारस्थानमेकं रुचिरतरमुमानाथलीलावनीकं
प्रालेयाद्रिप्रदेशे प्रथितमतितरामस्ति गङ्गानिवेशे ।
ख्यातं नारायणस्य त्रिजगति बदरीनाम सिद्धाश्रमस्य
तत्रैवानादिमूर्तेर्मुनिजनमनसामन्यदानन्दमूर्तेः ॥ ५० ॥ (१००)

सन्त्यन्ये त्रिदशापगादिपतनादेव प्रयागादयः
प्रालेयाचलसंभवा बहुफलाः सिद्धाश्रमाः सिद्धयः ।
यत्राघौघसहा भवन्ति सुधियां ध्यानेश्वराणां चिरं
मुक्ताशेषभियां विनिद्रमनसां कन्दाम्बुपर्णाशिनाम् ॥ ५१ ॥ (९९)

किं स्थानस्य निरीक्षणेन मुरजिद्ध्यानाय भूमण्डले
भ्रातश्चेद् विरतिर्भवेद् दृढतरा यस्य स्रगादौ सदा ।
तस्यैषा यदि नास्ति हन्त सुतरां व्यर्थं तदन्वेषणं
स्थानस्यानधिकारिणः सुरधुनीतीराद्रिकुञ्जादिषु ॥ ५२ ॥ (४४)

स्वान्तव्योम्नि निरस्तकल्मषघने सद्बुद्धितारावली-
संदीप्ते समुदेति चेन् निरुपमानन्दप्रभामण्डलः ।
ब्रह्मज्ञानसुधाकरः कवलिताविद्यान्धकारस्तदा
क्व व्योम क्व सदागतिः क्व हुतभुक् क्वाम्भः क्व सर्वंसहा ॥ ५३ ॥ (२५)

---

47 b) N न च सरस° (hypermetric). 48 b) B स्वात्मना वर्जितेभ्यः. 49 a) N प्रशान्तं (for °न्ते). — b) B निर्विशङ्कं. — c) N अन्वेष्यं (for अन्विष्यंस्). B उन्मूलयैतत्. — d) B °वृक्षे. B मथितगुरु° (for प्रथिततम°). 51 a) B पुण्याः (for एव). — c) B °दहा (for °सहा). 52 b) B स्रक्चन्दनादौ (for यस्य स्रगादौ). — c) B सा चैषा (for तस्यैषा). N तदान्वेषणं. 53 a) B स्वान्तव्योम्नि.

विश्वेश्वरे भवति विश्वजनीनजन्मविश्वंभरे भगवति प्रथितप्रभावे ।
यो दत्तचित्तविषयः सुकृती कृतार्थो यत्र क्वचित् प्रतिदिनं निवसन् गृहादौ ॥ ५४ ॥
चिद्रत्नमत्र पतितं वपुरन्धकूपे पुंसो प्रमादनुपमं सहनीयतेजः ।
उद्धृत्य यो जगति तद् भविता कृतार्थो मन्ये स एव समुपासितविश्वनाथः ॥ ५५ ॥

यद्येता मदनेषवो मृगदृशश् चेतःकुरङ्गारयो
धीराणामपि नो भवेयुरबलाः संसारमायापुरे ।
को नामामृतसागरे न रमते धीरः सदा निर्मले
पूर्णानन्दमहोर्मिरम्यनिकरे रागादिनक्रोज्झिते ॥ ५६ ॥ (४१)

बालेयं बालभावं त्यजति न सुदती यत्कटाक्षैर्विशालैर्
अस्मान्विभ्रामयन्ती लसदधरदलाक्षिप्तचूतप्रवाला ।
नेतुं वाञ्छत्यकामान् स्वसदनमधुना क्रीडितुं दत्तचित्तान्
पुष्यन्नीलोत्पलाभे मुरजिति कमलावल्लभे गोपलीले ॥ ५७ ॥ (४२)

शिव शिव महाभ्रान्तिस्थानं सतां विदुषामपि
प्रकृतिचपला धात्रा सृष्टाः स्त्रियो हरिणीदृशः ।
विजहति धनं प्राणैः साकं यतस् तदवाप्तये
जपति मनुजा रागाकृष्टास् तदेकपरायणाः ॥ ५८ ॥ (३८)

हरति वपुषः कान्तिं पुंसः करोति बलक्षतिं
जनयति भृशं भ्रान्तिं नारी सुखाय निषेविता ।
विरतिविरसा भुक्ता यस्मात् ततो न विवेकिभिर्
विषयविरसैः सेव्या मायासमाश्रितविग्रहा ॥ ५९ ॥ (३९)

कमलवदना पीनोत्तुङ्गं घटाकृति बिभ्रती
स्तनयुगमियं तन्वी श्यामा विशालदृगञ्चला ।
विशददशना मध्यक्षामा वृथेति जनाः श्रमं
विदधति मुधा रागादुच्चैरनीदृशवर्णने ॥ ६० ॥ (४०)

जनयति सुतं कंचिन् नारी सती कुलभूषणं
निरुपमगुणैः पुण्यात्मानं जगत्परिपालकम् ।
कथमपि न सा निन्द्या वन्द्या भवेन् महतां यतः
सुरसरिदिव ख्याता लोके पवित्रितभूतला ॥ ६१ ॥ (४३)

---

54 [a]) B विश्वेश्वरो. B जनीनजन्मा. 55 [b]) B महनीयतेजः. — [c]) B सद्यः समुद्धरति (for उद्धृत्य यो जगति). 56 [c]) N तदा (for सदा). 57 [b]) B °बलक्षिप्त°. 59 [a]) N बलक्षितिं. — [d]) B °विमुखैः (for °विरसैः). 60 [c]) B मध्ये क्षामा. B nos. 54 = 18, 55 = 24. 61 [b]) B °पालनं (for °पालकम्).

धन्या एते पुमांसो यदयमहमिति त्यक्तचेतोविकल्पा
निःशङ्कं संचरन्तो विदधति मलिनं कर्म कामप्रयुक्ताः ।
जानन्तोऽप्यर्थहीनं जगदिदमखिलं भ्रान्तवद् द्वैतजालं
रागद्वेषादिमन्तो वयमयमिति हा न त्यजन्तेऽभिमानम् ॥६२॥ (१५)

प्रज्ञावन्तोऽपि केचिच् चिरमुपनिषदाद्यर्थकारा यतन्तो
व्याकुर्वन्तोऽपि केचिद् दलितपरमता यद्यपि ज्ञाततत्त्वाः ।
तीर्थे तीर्थे तथापि भ्रमणरसिकतां नो जहत्यध्वखेदा
यत् तत् कष्टं विधत्ते मम मनसि सदा पश्यतस् तत्र कृत्यम् ॥६३॥ (५)

तीर्थावस्थानजन्यं न भवति सुकृतं दुष्कृतोन्मूलनं वा
यस्मादाभ्यां विहीनः श्रुतिसमधिगतः प्रत्यगात्मा जनानाम् ।
सर्वेषामद्वितीयो निरतिशयसुखं यद्यपि स्वप्रकाशास्
तीर्थे विद्यास् तथापि स्पृहयति तपसे यत् तदाश्चर्यहेतुः ॥ ६४ ॥ (४)

उदासीनो देवो मदनमथनः सज्जनकुले
कलिक्रीडासक्तः कृतपरिजनः प्राकृतजनः ।
इयं म्लेच्छाक्रान्ता त्रिदशतटिनी चोभयतटे
कथं भ्रातः स्नाता कथय सुकृतिन् कुत्र विभयः ॥ ६५ ॥ (७९)

निःसारा वसुधाधुना समजनि प्रौढप्रतापानल-
ज्वालाजालसमाकुला द्विपघटासंघट्टविक्षोभिता ।
म्लेच्छानां रथवाजिपत्तिनिवहैरुन्मूलिता कीदृशी-
यं विद्या भवितेति हन्त न सखे जानीमहे मोहिताः ॥ ६६ ॥ (८०)

वेदो निर्वेदमागादिह नमनभिया ब्राह्मणानां वियोगाद्
वैयासिक्यो गिरोऽपि क्वचिदपि विरलाः सांप्रतं सन्ति देशे ।
इत्थं धर्मे विलीने यवनकुलपतौ शासति क्षोणिबिम्बं
नित्यं गङ्गावगाहाद् भवति गतिरितः संसृतेरर्थसिद्धौ ॥ ६७ ॥ (८१)

गङ्गा गङ्गेति यस्याः श्रुतमपि पठितं केनचिन् नाममात्रं
दूरस्थस्यापि पुंसो दलयति दुरितं प्रौढमित्याहुरेके ।
सा गङ्गा कस्य सेव्या न भवति भुवने सज्जनस्यातिभव्या
ब्रह्माण्डं प्लावयन्ती त्रिपुरहरजटामण्डलं मण्डयन्ती ॥ ६८ ॥ (८२)

यत्तीरे वसतां सतामपि जलैर्मूलैः फलैर्जीवतां
मुक्ताहंममभावशुद्धमनसामाचारविद्यावताम् ।

---

63 [a]) B नो जहात्यध्वखेदाद्. 64 [b]) B °गतप्रत्यगात्मा. — [c]) B °शयसुखो.
65 [d]) N सुकृती (for सुकृतिन्). 68 [d]) N (wrongly) मण्डयन्तीम्.

कैवल्यं करबिल्वतुल्यममलं संपद्यते हेलया
सा गङ्गा ह्यतुलाऽमलोर्मिपटला सद्भिः कुतो नेक्ष्यते ॥ ६९ ॥ (८९)
तीर्थानामवलोकने सुमनसामुत्कण्ठते मानसं
तावद् भूवलये सतां पुररिपुध्यानामृतास्वादिनाम् ।
यावत् ते न विलोकयन्ति सरितां रोचिष्णुमुक्तावलीं
श्रीमन्नाकतरङ्गिणीं हरजटाजूटाटवीविभ्रमाम् ॥ ७० ॥ (९०)
संसारो विविधाधिबाधविधुरः सारायते मानसे
निःसारोऽपि वपुष्मतां कलिवृकग्रासीकृतानां चिरम् ।
दृष्टायां घनसारपाथसि महापुण्येन यस्यां सतां
सा सेव्या न कुतो भवेत् सुरधुनी स्वर्गापवर्गोदया ॥ ७१ ॥ (९१)
यस्याः संगतिरुन्नतिं वितनुते वाराममीषां जनैर्
उद्गीता कविभिर्महेश्वरमनोभीष्टा महीमण्डले ।
सा सन्तः शरदिन्दुसोदरपयःपूराभिरामा नद-
त्कोकश्रेणिमनोज्ञपुण्यपुलिना भागीरथी सेव्यताम् ॥ ७२ ॥ (८४)
क्वचिद्धंसश्रेणी सुखयति रिरंसुः श्रुतिसुखं
नदन्ती चेतो नो विपुलपुलिने मन्थरगतिः ।
तदेतस्यां योऽर्थी सुरतरुलता नाकतटिनी
सदा सद्भिः सेव्या सकलपुरुषार्थाय कृतिभिः ॥ ७३ ॥ (९२)
कलौ गङ्गा काश्यां त्रिपुरहरपुर्यां भगवती
प्रशस्ता देवानामपि भवति सेव्यानुदिवसम् ।
इति व्यासो ब्रूते मुनिजनधुरीणो हरिकथा-
सुधापानस्वस्थो गलितभवबन्धोऽतुलमतिः ॥ ७४ (८३)
यावज्जागर्ति चित्ते दुरितकलुषिते प्राणिनो वित्तपुत्र-
क्षेत्राद्यर्थेषु चिन्ता तदतिपरतया भ्राम्यमाणस्य नित्यम् ।
तावन्नार्थस्य सिद्धिर्भवति कथमपि प्रार्थितस्यार्तिभाजा
कैवल्याख्यस्य लोके रमणसुखभुवो मुक्तदोषानुषक्तेः ॥ ७५ ॥ (२७)
सन्त्यर्था मम संचिताश्च च बहुधा पित्रादिभिः सांप्रतं
वाणिज्यैः कृषिभिः कलाभिरपि तान् विस्तारयिष्यामि वः ।
हे पुत्रा इति भावयन्ननुदिनं संसारपाशावलिं
छेत्तायं नु कथं मनोरथमयीं जीवो निरालम्बनः ॥ ७६ ॥ (६०)

---

71 [a]) N °बधिरः (for °विधुरः). — [c]) B इष्टायां (for दृष्टायां). 72 [d]) N °मनोज° (for °मनोज्ञ°). 73 [c]) B हरन्ती पापौघान्सुरतरुवृता नाकतटिनी. 75 [b]) N भ्राम्यमानस्य. 76 [a]) N बहुविधाः (for च बहुधा). — [c]) N °पाशावलीं. — [d]) N तु (for नु).

जानन्नेव करोति कर्म बहुलं दुःखात्मकं प्रेरितः
केनाप्यप्रतिवाच्यशक्तिमहिमा देवेन मुक्तात्मना ।
सर्वज्ञेन हृदिस्थितेन तनुमत्संसाररङ्गाङ्गणे
माद्यद्बुद्धिनटीविनोदनिपुणो नृत्यन्ननङ्गप्रियः ॥ ७७ ॥ (४५)

को देवो भुवनोदयावनकरो विश्वेश्वरो विद्यते
यस्याज्ञावशवर्तिनो जलधयो नाप्लावयन्ति क्षितिम् ।
इत्याम्नातमपीश्वरं सुरशिरोरत्नं जगत्साक्षिणं
सर्वज्ञं धनयौवनोद्धतमना नो मन्यते बालिशः ॥ ७८ ॥ (९)

कस्येमौ पितरौ मनोभववता तापेन संयोजिता-
वन्योन्यं तनयादिकं जनयतो भूम्यादिभूतात्मभिः ।
इत्थं दुःस्थमतिर्मनोभवरतिर्यो मन्यते नास्तिकः
शान्तिस् तस्य कथं भवेद् धनवतो दुष्कर्मधर्माश्रमात् ॥ ७९ ॥ (१०)

हिक्काकासभगंदरोदरमहामेदज्वरैराकुलः
श्लेष्माद्यैरपि निद्रया विरहितो मन्दानलोऽल्पाशनः ।
तारुण्येऽपि विलोक्यते बहुविधो जीवो दरिद्रेश्वरो
हा कष्टं कथमीदृशं भगवतः संसारदुःसागरे ॥ ८० ॥ (५८)

माद्यत्तार्किकतान्त्रिकद्विपघटासंघट्टपञ्चाननस्
तद्वद्दृप्तकृतान्तवैद्यककलाकल्पोऽपि निष्किंचनः ।
यत्र क्वापि धनाशया कृशतनुर्भूपालसेवापरो
जीवन्नेव मृतायते किमवरं संसारदुःसागरे ॥ ८१ ॥ (५५)

आढ्यः कश्चिदपण्डितोऽपि विदुषां सेव्यः सदा धार्मिको
विश्वेषामुपजारको मृगदृशामानन्दकन्दाकरः ।
कर्पूरद्युतिकीर्तिभूषितहरिद्भूमण्डले गीयते
शश्वद्बन्दिजनैर्महीतनुभृतः पुण्यैर्न कस्योदयः ॥ ८२ ॥ (७)

कर्तव्यं न करोति बन्धुभिरपि स्नेहात्मभिर्बोधितः
कामित्वादवमन्यते हितमतं धीरोऽप्यभीष्टं नरः ।
निष्कामस्य न विक्रिया तनुभृतो लोके क्वचिद् दृश्यते
यत्तस्मादिदमेव मूलमखिलानर्थस्य निर्धारितम् ॥ ८३ ॥ (४६)

---

77 [b]) Nt °महिना (for °महिमा). — [c]) B मनुजः (for तनुमत्-). 78 [b]) N जलधियो (wrongly). 79 [d]) B °धर्माश्रयात्. 81 [b]) N °कदन्त° (for °कृतान्त°). — [c]) N विनाशया (for धना°). 82 [a]) B धार्मिका. — [b]) B °कारको (for °जारको). 83 [b]) N अभिमन्यते. B निजहितं (for हितमतं). — [d]) N °दयमेव (for °दिदमेव).

निष्कामा मुनयः परावरदृशो निर्धूतपापोदया
निःसङ्गा निरहंकृता निरुपमानन्दं परं लेभिरे ।
यद्गत्वा न लुठन्ति मातृजठरे दुःखाकरे मानवा
दुर्गन्धे पुनरेत्य काममकरे संसारपाथोनिधौ ॥ ८४ ॥ (२८)

कामस्यापि निदानमाहुरपरे मायां महाशासनीं
निश्चित्कां सकलप्रपञ्चरचनाचातुर्यलीलावतीम् ।
यत्सङ्गाद् भगवानपि प्रभवति प्रत्यङ्महामोहहा
श्रीरङ्गो भुवनोदयावनलयव्यापारचक्रेऽक्रियः ॥ ८५ ॥ (२१)

तुल्यार्थेन त्वमैक्यं त्रिभुवनजनकस्य तत्पदार्थः प्रपद्य
प्रत्यक्षं मोहजन्म त्यजति भगवति त्वंपदार्थोऽपि जीवः ।
श्रुत्याचार्यप्रसादात् निरुपमविलसद्ब्रह्मविद्यस्तदैक्यं
प्राप्यानन्दप्रतिष्ठो भवति विगलितानाद्यविद्योपरीहः ॥ ८६ ॥ (३२)

संन्यासो विहितस्य केशवपदद्वन्द्वे व्यधायि श्रुता
वेदान्ता निरवद्यनिष्कलपरानन्दाः सुनिष्ठाश्चिरम् ।
संसारे वधबन्धदुःखबहुले मायाविलासेऽव्ययं
ब्रह्मास्मीति विहाय नान्यदधुना कर्तव्यमास्ते क्वचित् ॥ ८७ ॥ (३५)

हित्वा विश्वाद्यवस्थाः प्रकृतिविलसिता जाग्रदाद्यैर्विशेषैः
साधं चैतन्यधातौ प्रकृतिमपि समं कार्यजातैरशेषैः ।
ज्ञानानन्दं तुरीयं विगलितगुणकं देशकालाद्यतीतं
स्वात्मानं वीतनिद्रः सततमधिकृतश्चिन्तयेदद्वितीयम् ॥ ८८ ॥ (३४)

* * * * * *

अग्रे पश्चादधस्तादुपरि च परितो दिक्षु चान्यास्वनादिः
कूटस्था संविदेका सकलतनुभृतामन्तरात्मानियन्त्री ।
यस्यानन्दस्वभावा स्फुरति शुभधियः प्रत्यहं निष्प्रपञ्चा
जीवन्मुक्तः स लोके जयति गतमहामोहविश्वप्रपञ्चः ॥ ९० ॥ (३६)

क्वाहं ब्रह्मेति विद्या निरतिशयसुखं दर्शयन्ती विशुद्धं
कूटस्थं स्वप्रकाशं प्रकृतिसुचरिता खण्डयन्ती च मायाम् ।
क्वाविद्याहं ममेति स्थगितपरसुखा चित्तभित्तौ लिखन्ती
सर्वानर्थाननर्थान् विषयगिरिभुवा वासनागैरिकेण ॥ ९१ ॥ (२६)

---

85 [a]) N महाशासना(:). — [d]) N °चक्रे क्रियाः. 86 [d]) B °नाद्यविद्यो निरीहः. Lacuna in N for 89. 90 [a]) N धान्या° (for चान्या°)?. 91 [a]) B काहं. — [b]) B कूटस्थ- (for कूटस्थं). — [d]) B °गिरिभवा.

अहं ब्रह्मास्मीति स्फुरदमलबोधो यदि भवेत्
 पुमान्पुण्योद्रेकादुपचितपरानर्थविरतिः ।
तदानीं क्वाविद्या भृशमसहमानौपनिषदं
 विचारं संसारः क्व च विविधदुःखैकवसतिः ॥ ९२ ॥ (३३)

कश्चित् क्रन्दति कालकर्कशकराकृष्टं विनष्टं हठाद्
 उत्कृष्टं तनयं विलोक्य पुरतः पुत्रेति हा हा क्वचित् ।
कश्चिन् नर्तकनर्तकीपरिवृतो नृत्यत्यहो कुत्रचिच्
 चित्रं संसृतिपद्धतिः प्रथयति प्रीतिं च कष्टं च नः ॥ ९३ ॥ (६८)

नान्नं जीर्यति किंचिदौषधबलं नालं स्वकार्योदये
 शक्तिश्च चङ्क्रमणे न हन्त जरया जीर्णीकृतायां तनौ ।
अस्माकं त्वधुना न लोचनबलं पुत्रेति चिन्ताकुलो
 ग्लायत्यर्थपरायणोऽतिकृपणो मिथ्याभिमानो गृही ॥ ९४ ॥ (५०)

अन्नाशाय सदा रटन्ति पृथुकाः क्षुत्क्षामकण्ठाः स्त्रियो
 वासोभी रहिता बहिर्व्यवहृतौ निर्यान्ति नो लज्जया ।
गेहादङ्गणमार्जनेऽपि गृहिणो यस्येति दुर्जीवितं
 यद्यप्यस्ति तथापि तस्य विरतिर्नोदेति चित्रं गृहे ॥ ९५ ॥ ([illegible])

सद्वंशो गुणवानहं सुचरितः श्लाघां करोत्यात्मनो
 नीचानां विदधाति च प्रतिदिनं सेवां जनानां द्विजः ।
योषित् तस्य जिघृक्षया स च कुतो नो लज्जते सज्जनाल्
 लोभान्धस्य नरस्य नो खलु सतां दृष्टं हि लज्जाभयम् ॥ ९६ ॥ (४९)

कामादित्रिकमेव मूलमखिलक्लेशस्य मायोद्भवं
 मर्त्यानामिति देवमौलिविलसद्भ्राजिष्णुचूडामणिः ।
श्रीकृष्णो भगवानवोचदखिलप्राणिप्रियो मत्प्रभुर्
 यस्मात् तत्त्रिकमुद्यतेन मनसा हेयं पुमर्थार्थिना ॥ ९७ ॥ (२०)

यत्प्रीत्यर्थमनेकधामनि मया कष्टेन वस्तु प्रियं
 स्वस्याशाकवलीकृतेन विकलीभावं दधानेन मे ।
तत्सर्वं विलयं निनाय भगवान् यो लीलया निर्जरो
 मां हित्वा जरयाकुलीकृततनुं कालाय तस्मै नमः ॥ ९८ ॥ (६५)

---

92 [cd]) क्व च तव ममेत्यल्पविषयोऽभिमानः (for भृशम°—°चारं). 94 [d]) B °भिमानी. 96 [c]) B यो वित्तस्य (for योषित्तस्य). 98 [a]) B °भालभि (for °धामनि).

आयुर्वेदविदां रसाशनवतां पथ्याशिनां यत्नतो
वैद्यानामपि रोगजन्म वपुषो ह्यन्तर्यतो दृश्यते ।
दुश्चक्षुःकवलीकृतत्रिभुवनो लीलाविहारस्थितः
सर्वोपायविनाशनैकचतुरः कालाय तस्मै नमः ॥ ९९ ॥ ( ६६ )

ते धन्या भुवने सुशिक्षितपरब्रह्मात्मविद्या जना
लोकानामनुरञ्जका हरिकथापीयूषपानप्रियाः ।
येषां नाकतरङ्गिणीतटशिलाबद्धासनानां सतां
प्राणा यान्ति लयं सुखेन मनसा श्रीरङ्गचिन्ताभृताम् ॥ १०० ॥ (३७)

हे पुत्रा व्रजताभयं यत इतो गेहं जनन्या समं
रागद्वेषमदादयो भवतु वः पन्थाः शिवोऽमायया ।
काशीं सांप्रतमागतोऽहमह ह क्लेशेन हातुं वपुः
सर्वानर्थगृहं सुपर्वतटिनीवीचिश्रिया मण्डितम् ॥ १०१ ॥ ( ३ )

यत्साक्षादभिधातुमक्षमतया शब्दाद्यनालिङ्गितं
कूटस्थं प्रतिपादयन्ति विलयद्वारा प्रपञ्चस्रजः ।
मोक्षाय श्रुतयो निरस्तविधयो ध्यानस्य चोच्छित्तये
तत्राद्वैतवने सदा विचरताच् चेतःकुरंगः सताम् ॥ १०२ ॥ ( ३१ )

बुधानां वैराग्यं सुघटयतु वैराग्यशतकं
गृहस्थानामेकं हरिपदसरोजप्रणयिनाम् ।
जनानामानन्दं वितरतु नितान्तं सुविशद-
त्रयं शेषव्याख्यागलिततमसां शुद्धमनसाम् ॥ १०३ ॥

॥ इति श्रीभर्तृहरिविरचितं विज्ञानशतकं चतुर्थम् ॥

---

99 c) N दुश्चक्षोत्कवली°. 102 c) B [ऽ]ज्ञानस्य (for ध्यानस्य). 103 Omitted in B.

# Alphabetical Index of Ślokas

Parentheses enclose a beginning found only in the critical apparatus.

# Addenda And Corrigenda.

Special attention is again called to supplementary information about MSS in the Introduction; also to extra variants and corrections under versions Q, H, $T_1$.

**Sanskrit Text:** Read on p. 10, $22^c$ किमपरैः for किमपरैः; p. 65, $166^d$ सुतराम् for सुतराम्; $167^b$ हृदय for हृदय; p. 67, $171^b$ यत्राप्येकस् for यत्राप्येकस; p. 97, $247^a$ सार्धमन्येन for सार्धमन्यने; p. 112, $286^c$ जृम्भते for जम्भते; p. 120, $305^d$ °चित्तः for °चित्तः; p. 149, number of 432 misprinted 433; p. 150, 441 should be combined with p. 153, 461; p. 153, $466^a$ read °कर्कशकर- for °कर्कशर-; p. 160, 510 is found in an anonymous fragment of a printed anthology as तरुणि संहर संहर लोचने तृणलवेषु कुठारपरिग्रहः। मयि मनोभवमार्गणपीडिते न हि सतामुचितं मृतमारणम् ॥ p. 167, 556–557 are in inverted alphabetical order; p. 185, $689^b$ read धन्यास् for धन्यांस्; p. 186, 700 is more correctly reported in one of the unnumbered Ham MSS as N1 = योगेन्द्रेण फलं प्रदत्तमजरामृत्याय यस्मै पुनः राज्ञ्यै भर्तृहरेण दत्तमनया वंठाय तस्मै ददे। वंठेनादित हीनपुण्ययुवतौ विप्राय वारस्त्रिया विप्रेणापि तदेव दैववशतो राज्ञे प्रदत्तं पुनः ॥ p. 187, 705–706 in inverted alphabetical order; $710^c$ emend वनेषु to नवेषु; p. 190, 730 is the unemended form of p. 191, 735, printed inadvertently; p. 193, $754^{cd}$ might be खण्डिता एव शोभन्ते वीराधरपयोधराः ॥ cf. SRB. p. 328. 3; p. 205, $852^a$ read घृतं for घृतं; p. 225, $101^d$ read मण्डितास for मण्डितम् [ to qualify काशीं ].

**Critical Apparatus:** ıtus: Y means Y T G M on p. 2, 4 and p. 3, 6; p. 4, $7^d$ variants झटति etc. should be rd be read झटति etc.; p. 44, 112 Harilal's lith. ed. is dated 1860; p. 59, $149^d$ MS C MS C reads संप्राप्तोपि वराटकोहि; p. 79, $197^a$ version A, not B, reads कांत्युज्वलं; P.लं; p, 117, 298 seems to have been constructed from two consecutive stanza stanzas as for example in the *Pañcatantra*, ed. Bomb. I. 188–189 by adding *ab* ng *ab* of the second to *cd* of the first.

The critical apparatus does s does not cite Q numbers, which will be found in the synoptic chart. MS C contaiontains stanza 501, but not the alternative form 739, as N46. The following numl numbers of group III ślokas in codex I have not been cited in the critical appara pparatus: 378 = N105(106); 528 = N101(102); 596 = N106(107), beginning अनुग॰ अनुगन्तव्याः; 599 = V65(71); 642 = N107(108); 648 = N28; 726 = Ś94(105); 772 = Ś9 = Ś93(98).

A MS in the newly acquir cquired Gokhale collection at the BORI is complete but for the first 3-1/2 sta stanzas, and seems to to be derived from the same parent version as Ham 874, 74, which is shorter. The omissions common to these are 278, 282, 283, 342; com common inclusions 291, 520, 544, 599 804 816. The following additional stanzas nzas from the BORI MS should be taken into group III, as numbers 853-6: N 8; N 5 = अयश्चणकचर्वणं फणिफणामणेः कर्षणं करेण गिरितोलनं जलनिधेः पदालंघनम्। प्रसुप्तहरिबोधनं बोधनं निशितखड्गसंस्पर्शनं भवेदिह न तु क्वचित् कृपणतो धनस्पर्शनम् ॥ ८५३ ॥–SRB. p, 72. 58. 58. Ś 91 = प्रियतः प्रभावपदमन्तोऽपि हृदयमान् भवति। न यावच् चन्दनतरुसुरभिनिर्मलमलयपवम यपवमानः ॥ ८५४ ॥ (followed by 274). V 3 = मनः कुत्रोद्योगः सपदि वद मे गम्यपदवीं नरे * नरे वा नार्यां वा गमनमुभयत्रापि च मृषा। यतस् ते क्लीबत्वं प्रतिपदमहो हास्यपदवीं जनस्तोके मा के मागास्त्वमनुसरहि ब्रह्म परमम् ॥ ८५३ ॥ V 2 = भ्रान्तमातुर्विवेकात् पितुरपि कृपणा मंक्षु कृत्वा कृत्वा पृथग्ग्रामाशा योषा स्वतन्त्रा व्रजति परगृहान्सर्वदा वीतलज्जा। पुष्ट्वा दम्भं स्वबन्धुं मम यम यमनियमौ भ्रातरौ भर्त्संयन्तीं खिन्नामेनां कुमार्यां तदपि कथमहं हन्त वन्ध्यां श्रयामि ॥ ८५६ ॥. —SR —SRB. p. 77. 56.

From a recently acquired MS. at the BVB, N104 = कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गतः स्त्रीभिः कस्य न खण्डितं भुवि मनः को नामा राज्ञां प्रियः। कः कालस्य न गोचरान्तरगतः [कोऽर्थी गतो गौरवं को वा दुर्जनवागुरासु पतितः] क्षेमेण यातः पुमान् ॥ ८५७ ॥ —BIS. 1942 (754). Pañc. ed. Koseg. I. 162. ed. orn. 115. ed. Bomb. 146. Hit. ed. Schl. II. 144. ed. Johns. 151. Suk. Pet. MS. 22. Vikramaca. 40. Ṣaḍratna 2 (Haeb. p. 4). Vṛddha Cāṇ. 16. 4. Subhāsh. 69; Śp. 1534; SBH. 3470 (Pañc.); SDK. 5. 36. 2 (p. 302); SRB. p. 178. 1011 (Pañc.). Copied Saṃvat 1667 at Burhāṇpūr by Sāha Nemīdāsa's son, rosident of Sārangpūr; complete, with an old Gujarāti translation differing from that of version B; N parallels Uda 1486 as also the middle half of Ś while V follows the long-vairāgya group. The scribe's carelessness, with the likelihood of this being a misch-codex, reduces the importance of omissions, among which are 43, 112, 143, 174*, 216, 231, 280, 297. Stanza 75, omitted in Uda 1486 is included though the two are concordant for this portion of the text. Other inclusions are 367, 412, 436, 440, 683 [गलितं], 550, 250, 528, 542, 262, 560, 582, 596, 599, 609, 264, 266, 272, 288, 295, 636, 724, 736, 739, 741, 337, 339, 344. MSS. no. 47-15 and 47-16 of the N. R. Māṭe collection at Sātārā are the W version N and V respectively, adding nothing except to the total number of codices examined which is now 381.

Introduction p. 23, l. 20, read Jodhpur for Jaipur.

भो भो पुस्तकवाचका बुधवरा युष्मानहं प्रार्थये
यद्धस्तत्वरया प्रमादजनितं बिन्द्वक्षरभ्रंशनम् ।
तद्दृष्ट्वा न शपेत मन्युवशगास्त्वत्पादपङ्केरुह-
द्वन्द्वे मे प्रणतस्य मस्तकमिदं भृङ्गायते क्षम्यताम् ॥

(From the Colophon to SSD. skandha V).